...त्। नहि निर्बलेन सबलो बाधितुं शक्यते।
...फलमिति चेत्; विघ्नविघाताय कृतं मङ्गलम्

...स्तु मङ्गलस्य द्वारमिति। मङ्गलं विघ्नध्वंसद्वारा
...। तथा च विघ्नध्वंसः समाप्तिश्चेत्युभयमपि
...ञ्चः (प्राचीनाः)। मङ्गलस्य विघ्नध्वंस एव फलं
(नवीनाः)। समाप्तिकारणन्तु बुद्धि-प्रतिभादि
...स्य स्वत एव नाभूवन् विघ्नाः, तत्कृतं मङ्गलं
निष्फलं स्यात् इति न दोषः। इष्टापत्तेः, विघ्नाशङ्कयैव तदाचरणात्
तथैव शिष्टाचारात्। पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि
तद्बोधक-वेदाऽप्रामाण्याभाववत् तत्र मङ्गलस्य निष्फलत्वेऽपि न तद्बोधक-
शास्त्राऽप्रामाण्याऽपत्तिः। तस्य सति विघ्ने तन्नाशबोधकत्वात्। (नवीन-
मते चायं विशेषः—मङ्गलस्य विघ्नध्वंस एव केवलं फलमिति न प्राचीन-
वत् कार्य-कारण-भावद्वय-कल्पनं तद्द्वारत्व-परिकल्पनक्लेशो वा। किञ्च
नास्तिकादिग्रन्थेषु स्वतःसिद्धविघ्नात्यन्ताभावोऽस्तीति नास्ति व्यति-
रेकव्यभिचारो यदर्थं जन्मान्तरीय-मङ्गल-परिकल्पन-क्लेशः क्रियते)।

३—पूर्वपक्षप्रदर्शनपूर्वकम् ईश्वरसिद्धिः प्रदर्श्यताम्। तत्र सत्प्रतिपक्षश्चोद्भाव्य
निराक्रियताम्।

ननु—नास्ति कश्चिद् ईश्वरो नाम प्रत्यक्षसिद्धः पदार्थ इति तन्नम-
स्कारात्मकं मङ्गलाचरणं सर्वथाऽनुपयुक्तमेवेति चेन्न—

रूपाद्यभावेन यद्यपि ईश्वरो न प्रत्यक्षगोचरः तथापि तत्सत्तायां
विद्यते अनुमानं प्रमाणम्। तथाहि—"क्षित्यङ्कुरादिकं कर्तृजन्यं
(सकर्तृकम्) कार्यत्वाद् घटवत्"। न चाऽनादिकालिक-क्षित्यङ्कु-
रादि-कर्तृत्वम् अस्मदादीनां (सर्वथाऽल्पशक्तीनामसर्वज्ञानाञ्च)
सम्भवतीति अनादिकालिकः सर्वत्राऽकुण्ठ¹शक्तिः सर्वज्ञश्चेश्वर एव
सिद्ध्यति तत्कर्तेति।

१-कर्तुमकर्तुमन्यथाकर्तुं सर्वथा समर्थः।

न च "क्षित्यङ्कुरादिकं कर्त्रजन्यं (अकर्तृकम्) शरीराऽजन्यत्वात् आकाशवत्" इति विरोध्यनुमानेन प्रकृतसाध्यस्य कर्तृजन्यत्वस्य योऽभावः = कर्त्रजन्यत्वम् (अकर्तृकत्वम्) तत्साधनात् 'सत्प्रतिपक्ष-[१] दोषदूषितत्वेन तवेश्वरसाधकानुमानं न प्रमाणमिति वाच्यम्। इदं हि भवतो विरोध्यनुमानं सत्प्रतिपक्षदोषोद्भावकं न विद्यते प्रयोजकम्, अर्थात् [२]व्यभिचारशङ्कोत्थाने तन्निवर्तकानुकूल-तर्कशून्यं हि एतत्। तथाहि—"शरीराऽजन्यत्वमस्तु कर्त्रजन्यत्वं मास्तु" इति व्यभिचारशङ्कायां जायमानायां नास्ति कश्चिद् भवतः पार्श्वेऽनुकूल-स्तर्कः। अस्माकमीश्वर-साधकानुमाने तु 'कार्यत्वमस्तु कर्तृजन्यत्वं मास्तु" इति जातायां व्यभिचारशङ्कायां कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव विद्यतेऽनुकूलस्तर्कः, नहि कारणेन विना कदाचित् कार्यं भवतीति। यदि कर्तृजन्यत्वं न स्यात् तदा कार्यत्वमपि न स्यात्। (नहि कार्यं कदाचित्कर्तुरजन्यम्) इति सिद्ध्यति पूर्वोक्तानुमानेन जगतः कर्ता कश्चिदीश्वरः। तथा चाहुरभियुक्ताः—

जगतां यदि नो कर्ता कुलालेन विना घटः।
चित्रकारं विना चित्रं स्वत एव भवेत्तदा॥

**४—शक्तेरतिरिक्तपदार्थत्वमाशङ्क्य समाधीयताम्। क्व च तस्या अन्तर्भावः?**

ननु—कथमेते सप्तैव पदार्थाः शक्तेरपि अतिरिक्तपदार्थत्वात्। तथा हि चन्द्रकान्तमणि-सहितो वह्निर्दाहं न जनयति, तद्रहितस्तु जनयतीति चन्द्रकान्तमणिना वह्निनिष्ठा दाहानुकूला शक्तिर्नाश्यते, सूर्यकान्तमणिसमवधानेन चन्द्रकान्तमणेरभावेन च सा जन्यते इत्यनुमीयते (वह्निर्मणिनाश्यदाहानुकूलशक्तिमान् मणिसमवधाने दाहाऽजनकत्वात् यन्नैवं तन्नैवं यथा घटः)। यदि वह्नेः शक्तिर्वह्नेरतिरिक्तः पदार्थो न स्यात् तदा किमिति चन्द्रकान्तमणि-समवधाने वह्निर्न दहतीति, ज्ञायते दाहानुकूला शक्तिः वह्नेरतिरिक्तः पदार्थः। एवं मन्येष्वपि पदार्थेषु विद्यते शक्तिरूपो भिन्नः पदार्थ इति चेन्न—

---

१—साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः।
२—'हेतुरस्तु साध्यं मास्तु' इति व्यभिचारशङ्का।

चन्द्रकान्त-मण्यभावविशिष्टो वह्निः स्वतन्त्रः चन्द्रकात-मण्य-भावो वह्निश्चेत्युभयं वा दाहं प्रति कारणं न केवलो वह्निरिति केवलस्य वह्नेर्दाहकारणत्वाभावात् इति न भवता शङ्कापङ्कः प्रक्षेप्तुं शक्यते। एवं निर्वाहेऽपि वलात् शक्तिमतिरिक्तपदार्थमाशङ्कसे चेद् ?, अनन्तशक्ति-तत्प्रागभाव-प्रध्वंसाभावकल्पनाद्यनुचितभारेणाऽवनतशिराः पुरुषायुषं वृषभायसे त्वम्। यद्यपि दाहप्रतिबन्धक-चन्द्रकान्त--मणिसद्भावेऽपि सूर्यकान्त-मणि-समवधाने कथं भवति दाह इति शक्यते शङ्कितुम्। तथापि न केवलं शुद्धस्य चन्द्रकान्त-मण्यभावस्य दाहहेतुत्वम्, अपि तु—उत्तेजकाभाव (सूर्यकान्तमण्यभाव)—विशिष्ट-चन्द्रकान्तमण्यभावस्यैव हेतुत्वमिति कल्पनान्नास्ति कश्चिद् दोषः। अर्थात्- [1]विशेषणाभावप्रयुक्तविशिष्टाभावत्वेन (विशेषस्य = उत्तेजकाभावस्य प्रकृतेऽसत्त्वात् तत्प्रयुक्तविशिष्टाभावत्वेन) उभय-मणिसत्तास्थानेऽपि चन्द्रकान्तमण्यभावस्य तत्र सत्त्वात् नास्ति दोषः। एवं तत्तत्पदार्थनिष्ठशक्तीनां तत्तत्पदार्थेष्वन्तर्भाव इति नास्ति शक्तिरतिरिक्तः कश्चित् पदार्थः।

५—सादृश्यमतिरिक्तः पदार्थोऽपि न वा ? नास्ति चेत्कुत्र तस्याऽन्तर्भावः ?।

---

टिप्पण्यां प्रश्नान्तराणि तत्र तत्र प्रदर्श्यन्ते; तदुत्तराणि च स्वयं कल्पनीयानि—इति न विस्मरणीयम्।

किन्नाम पदार्थत्वम् ? कियन्तः पदार्थाः ? वैशेषिकवत् कुतो न भाव-त्वाऽभावत्वेन पृथङ् निर्देशः ? एते सप्त नैयायिकाभिमता वैशेषिकाभिमता वा सयुक्तिकं दर्शयते।

१—त्रिविधो हि विशिष्टाभाव—:विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः, विशेष्यविशेषणोभयाभावप्रयुक्तश्चेति। यथा यत्रास्ति केवलं पुरुषः तत्रापि 'दण्डी पुरुषो नास्ती'ति जायते प्रत्ययः, योऽयं दण्डविशिष्टपुरुषाभावः स विशेषणाभावप्रयुक्तः। यत्र तु दण्डोऽस्ति पुरुषो नास्ति तत्रापि 'दण्डी पुरुषो नास्ति' इति प्रत्ययो भवति, स विशेष्याभावप्रयुक्तः। यत्र तु नापि पुरुषो न चापि दण्डः, तत्रोभयाभावप्रयुक्तो विशिष्टाभावः।

ननु—कथमेते एव पदार्थाः सादृश्यस्यापि पदार्थान्तरत्वात्। तद्धि द्रव्यादिषु षट्सु भावपदार्थेषु नान्तर्भवितुमर्हति, "यथा गोत्वं नित्यं तथाऽश्वत्वमपीति" प्रतीत्या गोत्वनिरूपितसादृश्यस्य अश्वत्वे भानात् सामान्येऽपि तस्य सत्त्वात्। नहि षट्सु भावपदार्थेषु कश्चिद् ईदृशः पदार्थो यः सामान्येऽपि विद्येत सादृश्यञ्च विद्यते सामान्येऽपीति न तत्रान्तर्भावः। भावत्वेन चेदं प्रतीयते, तस्मादभावेऽपि नास्यान्तर्भाव इति चेन्न—

सादृश्यं हि नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा-'चन्द्रवन्मुख'मित्यत्र चन्द्रभिन्नत्वे सति चन्द्रगताऽऽह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यम्। एवञ्च भिन्नत्वं=भेदः तस्याऽन्योन्याभावेऽन्तर्भावः। आह्लादकत्वस्य सुखरूपत्वेन गुणेऽन्तर्भावः। एतदातिरिक्तस्य च सादृश्यस्याऽभावात् न पदार्थान्तरत्वमिति दिक्।

२—द्रव्यत्वजातिसिद्धिः प्रदर्श्यताम्?

ननु द्रव्यत्वमप्यस्ति काचिज्जातिरित्यत्र किं प्रमाणम्। नहि तत्र प्रत्यक्षं प्रमाणम्, यथा घटेषु "घटोऽयं घटोऽय"मित्याकारकप्रत्यक्षप्रतीत्या यथा सिद्ध्यति घटत्वजातिस्तथा घृत-जतु-प्रभृति-सकल-द्रव्येषु सर्वसाधारण-व्यवहाराभावात् नास्ति प्रत्यक्षसिद्धा द्रव्यत्वजातिरिति चेन्न—

प्रत्यक्षप्रमाणाभावेऽपि अनुमानप्रमाणस्य तत्र सत्त्वात्, तथाहि—"समवायसम्बन्धावच्छिन्न—कार्यत्वावच्छिन्न—कार्यता—निरूपित—तादात्म्य-सम्बन्धावच्छिन्ना या द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नाया कारणताया अभावात् घटगतकार्यता-निरूपित-दण्डगत कारणतावत्" इति। न चात्र कारणतावच्छेदकं पृथिवीत्वादिकं सत्ता वा स्यादिति वाच्यम्। अन्यूनानतिरिक्त-वृत्तिधर्मस्यैव कारणतावच्छेदकत्व नियमात् न तयोरवच्छेदकत्वं सिद्ध्यति, पृथवीत्वादेर्न्यूनदेशवृत्तित्वात् सत्तायाश्चाधिकदेशवृत्तित्वात्। तादृशश्च धर्मो द्रव्यत्वमेवेति द्रव्यत्व जातिः सिद्ध्यति।

---

१—किन्नाम द्रव्यत्वम्? कति द्रव्याणि? कानि च तानि? न्यूनाधिकानि कुतो न?

(अत्र कार्यत्व-कुक्षौ यावत्कार्यप्रवेशेन गौरवात् सामान्यरूपेण कार्यकारणभावस्याऽप्रसिद्धत्वाच्च नेदमुपयुक्तं प्रमाणमिति चेद् अनुमानान्तरं गृहाण—"समवायसम्बन्धावच्छिन्न—संयोगत्वावच्छिन्न—संयोगनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यता-निरूपित-दण्डगतकारणतावत्"। अत्रापि केषाञ्चिन्मते विभुद्वय-संयोगस्य नित्यत्वात् संयोगनिष्ठा कार्यता संयोगत्वावच्छिन्ना न सम्पद्यते इति चेदनुमानान्तरं प्रदर्श्यते "समवाय-सम्बन्धावच्छिन्न-विभागत्वावच्छिन्न-विभागनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धा-वच्छिन्ना या द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कार-णतात्वात् घटगतकार्यतानिरूपित-दण्डगतकारणतावदिति दिक्)।

७—तमसो दशमद्रव्यत्वमाशङ्क्य निराक्रियताम्।

ननु—गुणाश्रयत्वं कर्माश्रयत्वं हि द्रव्यत्वम्। तमोऽपि नीलरूप-वत्त्वेन गुणाश्रयः, चलनादिक्रियावत्त्वाच्च कर्माश्रयस्तथा च भवति प्रतीतिः—"नीलं तमश्चलती"ति। परापरविभागश्चापि सन्दृश्यतेऽ-स्मिन् "परमिदं तमोऽपरमिदं तमः" इति प्रतीतेः। न चेदं पृथिवी गन्धशून्यत्वात्, नापि जलतेजसी नीलरूपवत्त्वात्, न चापि वाय्वा-काश-काल-दिगात्म-मनांसि रूपवत्त्वात् = तमसो रूपवत्त्वात् तेषु रूपाभावात्। किञ्चैतत्प्रत्यक्षे आलोकनिरपेक्षं चक्षुः कारणमिति सिद्ध्येदिदमपि दशमं द्रव्यं, कुतो नोक्तम्?। अयमत्र पूर्वपक्षसङ्ग्रहः—

तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्ध-द्रव्य-वैधर्म्यात् नवभ्यो भेत्तुमर्हति॥ इति चेत्—

तत्रोच्यते—उष्णस्पर्शादीनां सर्वसाधारण—प्रत्यक्षत्वात् तदाश्रय-त्वेनाऽभिमतं तेजोरूपं द्रव्यं सर्वसम्मतं विद्यते एव। तदभावे एव तमसोऽपि अन्तर्भावसम्भवे द्रव्यान्तर-कल्पनं सर्वथाऽन्याय्यम्। न च तमसि रूपवत्ताप्रतीतेः कथमिदं तेजोऽभावः, न ह्यभावो भवति कदापि रूपवान् इति वाच्यम्। तस्याः प्रतीतेः "नीलं नभः" इतिवत् भ्रान्तिरूपत्वात्! कर्मवत्ता-प्रतीतिरपि आलोकाऽपसरणोपाधिकी

भ्रान्तिरेव नहि तमश्चलति, अपितु-आलोकश्चलति, तत्र भवति भ्रान्तिश्चलति तमः इति। एवम्—तमसो दशमद्रव्यत्वे निराकृतेऽपि तददतिरिक्तत्व-कल्पनम् अनन्तावयवादिगौरवग्रस्तं दुस्साहसमात्रमेव।

आलोकाभाव एवेदं तमो द्रव्यं न तु स्वयम्।
नील-क्रिया-प्रतीतिस्तु भ्रान्तिरेवेति [1]मन्यताम्॥

८—जातिलक्षणं सपदकृत्यं व्याख्यायताम्।

सामान्यं जातिरिति नार्थान्तरम्। नित्यत्वे सति अनेक-समवेतत्वमिति लक्षणं जातेः (सामान्यस्य), यत् नित्यम् अनेकसमवेतं (समवायसम्बन्धेन वर्तमानम्) सा जातिः सामान्यं वेत्यर्थः। यथा अनेकेषु घटेषु समवायसम्बन्धेन वर्तमानं घटत्वादिकं जातिः सामान्यं वा। अनेक-समवेतत्वमित्येतावत्येव लक्षणे कृतेऽनेकसमवेतेषु संयोगादिषु स्यादतिव्याप्तिरित्युक्तम्। नित्यत्वे सतीति संयोगादिरनेकसमवेतोऽपि न नित्यः। नित्यत्वे सति समवेतत्वञ्चास्ति गगनपरिमाणेऽपीति तत्रातिव्याप्तिवारणाय प्रोक्तम्- अनेकेति। गगनपरिमाणस्यैकवृत्तित्वात्। नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावोऽप्यस्ति तत्रातिव्याप्तिं निराकर्तुमुच्यते—समवेतत्वमिति। अत्यन्ताभावो न भवति समवायेन वृत्तिमान्।

९—के जातिबाधकाः इति सोदाहरणं विशदीक्रियताम्।

अथवा—

"व्यक्तेरभेदस्तुल्यत्व" मित्यादि कारिका सोदाहरणं व्याख्यायाम्।

जातिबाधकाः षट्, यथा–१ व्यक्तेरभेदः, २ तुल्यत्वम्, ३ सङ्करः ४अनवस्थितिः, ५ रूपहानिः, ६ असम्बन्धश्चेति।

१—व्यक्तेरभेदः=एकव्यक्तिकत्वं जातिबाधकम्, यो धर्म एकस्यामेव व्यक्तौ तिष्ठेत् स न जातिरूप इत्यर्थः। यथा—आकाशत्वम्।

---

[1]—(३) किन्नाम गुणत्वम्?। कति गुणाः?। के च ते?। वैशेषिकदर्शनकारेण कथमुक्ता एते?। किन्नाम कर्मत्वम्?। कानि च तानि कति च?। कर्मत्वजातिश्च कथं सिद्ध्यति? भ्रमणादिकमपि अतिरिक्ततया कुतो नोक्तम्?।

२—तुल्यत्वम्=तुल्यव्यक्तिकत्वमित्यर्थः, ययोर्द्वयोर्धर्मयोर्व्यक्तिस्तुल्या स्यात्, तदुभयं जातिरूपं न भवति (अन्यतरत्तु जातिरूपं स्यादेव) यथा—घटत्वं कलशत्वञ्च ।

३—सङ्करः=परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः सोऽपि जातिबाधकः । यथा-भूतत्वाऽभाववति मनसि मूर्त्तत्वं वर्तते, मूर्त्तत्वाऽभाववति चाऽऽकाशे भूतत्वं वर्तते अनयोरेकत्र (पृथिव्यादिचतुष्टये) अस्ति समावेशस्तस्मादेतद्द्वयं जातिरूपन्नास्ति ।

४—अनवस्थितिः=अनवस्था (अप्रामाणिकाऽनन्त-पदार्थ-कल्पनाविश्रान्त्यभावः) । यथा—सामान्यत्वं न जातिः । अर्थात्—यदि सामान्येऽपि सामान्यान्तरं स्वीक्रियेत तर्हि तत्रापि सामान्यान्तरमित्यनवस्था प्रसज्येत ।

५—रूपहानिः=स्वस्वरूपहानिरित्यर्थः । सा च विशेषत्वस्य जातित्वे बाधिका । यदि विशेषपदार्थे विशेषत्वं जातिः स्यात्तदा स्वतो व्यावर्तकत्वं तत्स्वरूपं भज्येत । सामान्याश्रयस्य हि पदार्थस्य सामान्यमुखेनैव व्यावर्तकत्वनियमात् ।

६—असम्बन्धः=सम्बन्धाभावः, समवायसम्बन्धाभाव इति यावत् । स च समवायत्वस्य जातित्वे बाधकः । अर्थात्-यदि समवाये समवायत्वं जातिः स्यात्तर्हि समवायत्वस्य समवाये वृत्त्यर्थं समवायान्तरकल्पनाप्रसक्तिः स्यादिति दिक्[१] ॥

१०—विशेषपदार्थं निरूपयत ? किमर्थं तत्स्वीकार इत्यपि दर्शयत ? २०

"अन्त्यो नित्यद्रव्य-वृत्तिविशेषः परिकीर्तितः" अन्त्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषत्वमिति तल्लक्षणम् । अन्ते=अवसाने वर्तते इत्यन्त्यः, अवयविद्रव्याणां सर्वान्त्यः परमाणुस्तत्रापि व्यावर्तकत्वेन स्वीक्रियते विशेषः इति सर्वेषामन्त्योऽयं पदार्थः स च स्वतः स्वस्य व्यावर्तक इति नास्ति तत्र विशेषान्तरापेक्षा । तत्स्वीकारश्चेदयमर्थः—घटादीनां द्व्यणुकपर्यन्तानां सावयवानां पदार्थानां तत्तदवयवभेदात्

---

१—कतिविधं सामान्यम् (जातिः) ? । किं परं किमपरञ्च ? । द्रव्यत्वादिकं जातिः कथं परा चाऽपरा च ? ।

(अयं घटः अस्माद् घटाद् भिन्नः अवयवभेदात्) इत्यादिरूपेण परस्परं भेदः। परमाणूनान्तु निरवयवानां को नाम परस्परभेदकः स्यादित्याकाङ्क्षायां वैशेषिकैर्विशेषपदार्थः कल्प्यते। "अयं परमाणुरस्मात्परमाणोर्भिन्नः एतद्विशेषात्" इत्यादिरूपेण परमाणूना परस्परभेदको हि सः।

११—समवायं निरूपयत। समवायसिद्धिं वा प्रदर्शयत। 'घटादीनां कपालादावित्यादिकारिकां वा व्याख्यात। तत्रत्यो विशेषश्चोपपाद्यताम्।

नित्यसम्बन्धत्वं समवायत्वमिति समवाय-सामान्यलक्षणम्। अवयवावयविनोः, जाति-व्यक्त्योः, गुण-गुणिनोः, क्रिया-क्रियावतोः, नित्यद्रव्य-विशेषयोश्च (द्वयोरयुतसिद्धपदार्थयोरिति यावत्) यः संबन्धः स समवायः। प्राचीननैयायिकानां मते विशेषणतासंबन्धेनाऽभाववतः समवायस्य भवति प्रत्यक्षम् "इह कपालयोर्घटसमवायः" इतिप्रतीतेः। नव्यानां मते तु नास्ति समवायः प्रत्यक्षः, तत्सिद्ध्यर्थं विद्यतेऽनुमानं प्रमाणम् "गुणवान् घटः क्रियावान् घटः इत्यादिगुणक्रियादि-विशिष्टबुद्धिः विशेष्य-विशेषण-संबन्धविषया विशिष्टबुद्धित्वात् दण्डीपुरुष इतिविशिष्टबुद्धिवत्" इति। यथा 'दण्डी पुरुषः' इत्यत्रापि विशेषण-विशेष्ययोर्गुणघटयोः क्रिया-घटयोर्वा स्यात्कश्चित्संबन्धो यमियं विशिष्टबुद्धि-विषयीकुर्यादिति संबन्धसत्त्वे निर्णीते कोऽसौ संबन्ध इति जायते जिज्ञासा न च संयोग एवासौ स्यादिति वाच्यम्, द्वयोर्द्रव्ययोरेव संयोग इति नियमात् भवति संयोगादीनां बाधः। सम्पद्यते च तत्सम्बन्धत्वेन समवायसिद्धिः।

अत्र हि-अयुतसिद्धपदार्थानां स्वरूपसम्बन्धोऽस्तीति मीमांसकाः समामनन्ति। तन्मते चानेनाऽनुमानेन सिद्धसाधनं जातम् (सिद्धस्यैव स्वरूपसम्बन्धस्य साधनम्=सिद्धिरित्यर्थः)। समवायसाधनार्थं प्रवृत्तानां नैयायिकानाम् अर्थान्तरं नाम दोषश्च जायते यथा-'विनायकं प्रकुर्वाणो रचयमास वानरम्' इति। तत्रोच्यते-दोषद्वयमपीदं स्वरूप-सम्बन्धस्वीकारे एव सम्पद्यते। स्वरूपसम्बन्धानाञ्चानेकत्वेन भवति

तत्कल्पने महद्गौरवम् । अतो लाघवादेकं समवायमेव सम्बन्धत्वेन स्वीकुर्मः । तथा च नासिद्धसाधनं, न वाऽर्थान्तरदोषः ।

अथ समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिः स्यात् । अर्थात् रूप-समवायः स्पर्शसमवायश्चैकः वायौ च स्पर्शसमवायस्य सत्त्वे रूपसमवायोऽप्यस्त्येवेति रूपस्य तत्र प्रत्यक्षं स्यादिति चेन्न—

रूपसमवायसत्त्वेऽपि रूपाभावात् । अयम्भावः यो वै वायौ समवायः स [1]स्पर्शप्रतियोगिको न तु रूपप्रतियोगिकः । अर्थात्—वायौ स्पर्शादिप्रतियोगिकत्वेन रूपसमवायसत्त्वेऽपि रूपप्रतियोगिकत्वेन रूपसमवायाभावात् न रूपवत्ताबुद्धेः प्रसङ्गः ।

१२—अभावानामपि किञ्चिद्वैशिष्ट्यं सम्बन्धान्तरमस्ति न वा ?

ननु—यथा गुणक्रियादिविशिष्टबुद्धिमादायाऽयुतसिद्धपदार्थानां सम्बन्धः समवायः साधितस्तथैव 'घटाभाववद् भूतल'मिति विशिष्ट-बुद्धिमादायाऽभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिद्धयेत् । पूर्ववदत्रापि भवत्यनुमानम् । घटाभाववद् भूतलमित्यादिविशिष्टबुद्धिः विशेषणविशेष्य-संबन्धविषया विशिष्टबुद्धित्वात् दण्डीपुरुष इतिविशिष्टबुद्धिवत्, इति चेन्न—

तद्वैशिष्ट्यस्य विकल्पाऽसहत्वात् । तथाहि—इदमभावस्य संबन्धान्तरं नित्यमनित्यं वा ? तस्य नित्यत्वे घटाभाववति भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गः, घटाभावस्य वैशिष्ट्यस्य चोभयोरपि नित्यत्वेन घटसत्ताकालेऽपि तत्र सत्त्वात् । न च घटात्यन्ता-भावस्याऽनित्यत्वं स्यादिति वाच्यम् । तथा सति घटशून्यदेशेऽपि घटाभावप्रतीतिर्न स्यात् । न च तव मते यथा घटे पाकरक्ततादशायां श्यामरूपसमवायसत्त्वेऽपि न श्यामरूपवत्ता-प्रतीतिस्तथाऽत्रापि घटाभाववैशिष्ट्यस्य नित्यत्वेन तत्र सत्त्वेऽपि न घटात्यन्ताभावबुद्धिरिति वाच्यम् । घटे पाकरक्ततादशायां श्यामसमवायसत्वेऽपि श्यामरूप-स्याऽनित्यत्वेन नष्टत्वात् । तव तु मते यस्य वैशिष्ट्यं सोऽत्यन्ताभावोऽपि नित्यः । वैशिष्ट्यस्य चाऽनित्यत्वेऽनन्तवैशिष्ट्यकल्पने गौरवं स्पष्टमेव । इत्थञ्चात्र नाऽभावस्य किञ्चिद्वैशिष्ट्यं संबन्धान्तरम् । किन्तु तत्तत्का-लिकतत्तद्भूतलादिकमेव तत्तदभावानां संबन्धः ॥

१—यस्य संबन्धः स प्रतियोगि, यस्मिन् संबन्धः सोऽनुयोगी ।


१३—को नाम अभावः? कतिविधश्च सः! प्रत्येकं सलक्षणं सोदाहरणं प्रदर्शयत।

द्रव्यादि—षट्कान्योन्याभावत्वमित्यभावसामान्यलक्षणम् । द्विविधश्च सः संसर्गाभावोऽन्योन्याभावश्च । अन्योन्याभावभिन्नाभावत्वं संसर्गाभावत्वम् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अन्योन्याभावत्वम् । यथा—'घटो न पटः' इत्यत्र घटस्य तादात्म्यसम्बन्धेन पटेऽभावः पटस्य च तादात्म्यसम्बन्धेन घटेऽभावः । येन सम्बन्धेन भवति अभावः स एव सम्बन्धस्तदभावीयप्रतियोगिताया अवच्छेदको भवति । सा च प्रतियोगिता तत्सम्बन्धावच्छिन्ना प्रोच्यते । संसर्गाभावश्च त्रिधा प्रागभावः प्रध्वंसाभावः, अत्यन्ताभावश्चेति । तत्र विनाश्यभावत्वं-प्रागभावत्वम् अनादि-सान्तत्वमित्यर्थः, यथा 'घट उत्पत्स्यते' । जन्याभावत्वं प्रध्वंसाभावत्वं साद्यनन्तत्वमित्यर्थः 'यथा घटो ध्वस्तः' नित्यत्वे सति संसर्गाभावत्वम् अत्यन्ताभावत्वम्, यथा-'खपुष्पं नास्ति' शशशृङ्गं नास्ति।'

केचित्तु—'पटो नास्ति' 'घटो नास्ति' इत्यादिकमपि अत्यन्ताभावस्योदाहरणं मन्यन्ते । अत्यन्ताभावस्य नित्यत्वेपि यत्र घटादौ भूतलादिकमपसारितं पुनरानीतञ्च तत्र घटसत्ताकालस्य अत्यन्ताभावसम्बन्धाऽघटकत्वेन तत्काले न घटात्यन्ताभावबुद्धिरित्याचक्षते । अपरे पुनः 'खपुष्पं नास्ती'त्यादिकमेवाऽत्यन्ताभावस्योदाहरणं मत्वा 'घटो नास्ती'त्यादौ उत्पाद–विनाशशालिनं चतुर्थमेव संसर्गाभावं सामयिकापरपर्यायं स्वीकुर्वते।

ननु—"घट उत्पत्स्यते" 'घटो ध्वस्तम्' इत्यादिप्रागभावप्रध्वंसाभावस्थलेऽपि 'घटो नास्ति' इति व्यवहारो भवत्येव तथा च ध्वंसप्रागभावयोरधिकरणेऽपि अत्यन्ताभावसत्त्वेनाऽभावानां सङ्कीर्णत्वं स्यादिति चेत्—

अत्रोच्यते—नास्त्यभावानां संकीर्णत्वं कार्यंभविष्यद्दशायां प्रागभाव एव, विनष्टत्वे च प्रध्वंसाभाव एव नात्यन्ताभाव इति प्राचीनमतम् । एतादृशस्थलेषु 'नास्ती'ति प्रतीतिश्चापि प्रागभावं ध्वंसञ्चैवाऽवगाहते नतु तदत्यन्ताभावम् । नव्यास्तु—अभावानां परस्परविरोधे मानाभावात् प्रागभाव-प्रध्वंसाभाव-कालावच्छेदेनाऽपि अत्यन्ताभावो भवत्येवेति वेदन्ति ।

१४—अभावानामधिकरणात्मकत्वमाशङ्क्य तन्निराकरणं सोपपत्तिकं वर्णयत।

ननु—लाघवाद् अभावानामधिकरणात्मकत्वमेव स्यादतिरिक्त-कल्पने हि अभिनव-पदार्थकल्पनं तद्भेद-स्वरूपादिकल्पनञ्चेत्यादि-गौरवं भवेदिति चेन्न—

अनन्ताधिकरणात्मकत्वकल्पनापेक्षयाऽतिरिक्तकल्पनाया एव लघीयस्त्वात्। अयमर्थः—प्रत्यभावम् अधिकरणानि हि सन्त्यनेकानि, तत्तदभावस्थाने तत्तद्भिन्नाधिकरणत्वमित्यधिकरणात्मकत्वकल्पने स्यादानन्त्यं, तदपेक्षया तु भिन्नपदार्थजल्पने नास्ति तादृशं गौरवम्, अपि तु महल्लाघवम्, अनेकेष्वधिकरणेष्वेकस्याऽभावस्य स्वीकारात्। एवञ्च अभावस्यातिरिक्तत्व-स्वीकारे 'घटाभाववद्भूतल' मित्याऽऽधाराधेय-भावविषयक-प्रतीतिरपि सम्यक् सङ्गच्छते। भिन्नयोरेवाधाराधेय-भावनियमात्। किञ्चैवं गन्धरसाद्यभावानामपि घ्राणादीन्द्रियैः प्रत्यक्षत्वमुपपद्यते। अधिकरणात्मकत्वे तु तत्तदधिकरणानां तत्तदिन्द्रियाऽग्राह्यत्वात् कथं स्यात्प्रत्यक्षत्वम्। एतेनाऽभावस्य ज्ञानविशेषात्मकत्वं कालविशेषात्मकत्वं चापि निरस्तं वेदितव्यम् अप्रत्यक्षत्वापत्तेः। अर्थात् यदि गन्धाद्यभावो ज्ञानविशेषात्मकः कालविशेषात्मको वा स्यात् तदा तस्य घ्राणेन्द्रियादिभिः प्रत्यक्षत्वं स्यात्। नहि घ्राणेन्द्रियादि ज्ञानविशेषं कालविशेषं वा विषयीकरोति ज्ञानविशेषस्य मानसप्रत्यक्षविषयत्वात् कालविशेषस्य चाऽतीन्द्रियत्वेनेन्द्रियाऽग्राह्यत्वादिति निष्कर्षः।[1]

१५—'पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्' इति कारिकांशो व्याख्यायताम्।

पारिमाण्डल्यमित्यणुपरिमाणस्य पारिभाषिकी सञ्ज्ञा[2]। परमाणोः परिमाणं द्व्यणुकस्य च परिमाणम् अणुपरिमाणं तदेव पारिमाण्डल्यम्।

---

१—किन्नाम साधर्म्यं वैधर्म्यञ्च? सप्तानामपि किमेकं साधर्म्यं कथञ्च तस्य समन्वयः?। द्रव्यादिपञ्चानां किं साधर्म्यम्?। द्रव्यादित्रयाणाञ्च किं साधर्म्यम्?। गुणादिषण्णां साधर्म्यं प्रतिपादयत। जात्यादीनां (सामान्यादीनां) चतुर्णां किमेकं साधर्म्यं तत्सङ्गमयत।

२—परितो मण्डलं-वर्तुलं परिमण्डलं परमाणुः द्व्यणुको वा तस्य भावः पारिमाण्डल्यम् अणुपरिमाणम्।

तद्भिन्नानां सर्वेषामपि पदार्थानां कारणत्वमित्यर्थः। अणुपरिमाणन्तु न कस्यापि कारणम्। अयं हि नैयायिकानां नयः—यत् कारणपरिमाणं स्वाश्रयारब्धद्रव्यपरिमाणं जनयति। तथा च परमाणोः परिमाणं द्व्यणुकस्य परिमाणं वा द्व्यणुकपरिमाणं प्रति त्रसरेणुपरिमाणं प्रति च कारणं भवेत्, तच्च न सम्भवति, परिमाणस्य स्वसमानजातीय-परिमाण-जनकत्वनियमात् स्वोत्कृष्टपरिमाण—जनकत्वनियमाच्च। अर्थात्—परिमाणं हि स्वसमानजातीयं स्वोत्कृष्टञ्च परिमाणान्तरं जनयतीति विद्यते सिद्धान्तः। तथा च यदि परमाणुपरिमाणं द्व्यणुकपरिमाणं प्रति द्व्यणुकपरिमाणं त्रसरेणुपरिमाणं प्रति च कारणं-स्यात्तदा महदारब्धस्य महत्तरत्ववत् अणुजन्यस्य तस्याऽणुतरत्वप्रसंग आपतेत्। त्रसरेणुपरिमाणं हि नाऽणुपरिमाणसजातीयम् अपि तु विजातीयं महत्त्वात्, द्व्यणुकपरिमाणञ्च परमाणुपरिमाणसजातीय-मपि न तदुत्कृष्टम् उत्कृष्टत्वे चाऽणुतरत्वप्रसंगापत्तेः। एवं परमम-हत्परिमाणम् अतीन्द्रियसामान्यं विशेषाश्च वोध्याः। अर्थात्—एते-षामपि नास्ति कारणत्वमिति।

१६—इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्, ज्ञायमानसामान्यं न प्रत्यासत्तिः ज्ञायमानलिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् इति मूलपाठो व्याख्येयः।

इदमपीति—पूर्वोक्तं पारिमाण्डल्यस्याऽकारणत्वादिकं सर्वमेव इत्यभिप्रायेणोक्तमित्यत्राऽन्वेति, एतत्सिद्धान्ताभिप्रायेणोक्तमित्यर्थः। तथा हि यस्य मते योगिप्रत्यक्षे विषयस्य न कारणत्वं तन्मताभिप्राये-णेति—यदि योगिप्रत्यक्षविषयस्य कारणत्वं स्यात् तदाऽतीन्द्रियस्य पारिमाण्डल्यस्यापि योगिप्रत्यक्षविषयत्वात् कारणत्वं प्रसज्येत।

एवं यस्य मते ज्ञायमानसामान्यं न प्रत्यासत्तिः तन्मताभिप्रायेणेति। अन्यथाऽलौकिक—सन्निकर्षेषु सामान्यलक्षणमित्यस्य ज्ञायमान-सामान्यं स्वरूपं वेत्यर्थः क्रियेत, सैवं च प्रत्यासत्तिः-अलौकिकसन्निकर्षो मन्येत, तर्हि—'परमाणुरणुपरिमाणवान्' इत्यत्र अणुपरिमाणस्य (पारिमाण्डल्यस्य) ज्ञायमानसामान्यत्वेनाणुपरिमाणवतां सर्वेषां पदा-र्थानामलौकिकप्रत्यक्षे कारणत्वप्रसङ्गः स्यात्।

किञ्च यस्य मते ज्ञायमानलिङ्गं नाऽनुमितिकरणं तन्मताभिप्रायेणेति—यदि ज्ञायमानलिङ्गमनुमितिकरणं स्यात् तदा 'परमाणुरप्रत्यक्षोऽणुपरिमाणात्' इत्यनुमिताणुपरिमाणस्य पारिमाण्डल्यस्य ज्ञायमानलिङ्गत्वेन कारणत्वमापतेत् ।

(त्रिष्वप्येतेषु स्थलेषु पूर्वपक्षत्वाभिमतानां मतानां खण्डनं विधाय तत्र तत्र वास्तविकाः सिद्धान्ताः प्रदर्शिताः सन्ति । अर्थात्-योगिप्रत्यक्षे विषयस्य न कारणत्वम्, अलौकिकप्रत्यक्षे च सामान्यज्ञानस्य कारणत्वम्, तथा चाऽनुमितौ व्याप्तिज्ञानस्य कारणत्वमिति तत्र तत्रैव कर्णेहत्याऽवलोकनीयम्)।

१७—किन्नाम कारणम् ?, कतिविधञ्च तत् ?, प्रत्येकं सलक्षणं सोदाहरणञ्च निरूप्यताम् ।

अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वं कारणत्वमितिकारणसामान्यलक्षणम् । त्रिविधञ्च तत्—समवायिकारणम्, असमवायिकारणम्, निमित्तकारणञ्चेति । यस्मिन् समवायसम्बन्धेन कार्यमुत्पद्यते समवायिकारणं तत्, यथा—घटादिकं प्रति कपालादि । समवायिकारणे प्रत्यासन्नं कारणमसमवायिकारणम्, यथा—घटादिकं प्रति कपालसंयोगादि । समवायिकारणाऽसमवायिकारणाभ्यां भिन्नं कारणं निमित्तकारणम् यथा—घटादिकं प्रति दण्डचक्रादिकम् ।

१८—किन्नामाऽसमवायिकारणम् ?, कतिविधञ्चेदम् ? । किञ्च तस्य परिष्कृतं लक्षणं पर्यवस्यति ?

समवायिकारणे आसन्नम्=प्रत्यासन्नं कारणम् असमवायिकारणमुच्यते । परमेतल्लक्षणानुसारं तुरीतन्तुसंयोगादीनामपि पटाऽसमवायिकारणत्वं स्यात्; वेगादीनाञ्चाभिघातादेरसमवायिकारणत्वं स्यात्, ज्ञानादीनाञ्चेच्छाद्यसमवायिकारणत्वं स्यात् । तद्वारणाय पटाऽसमवायिकारणलक्षणं तुरीतन्तुसंयोगभिन्नत्वं देयम् । एवम् अभिघाताऽसमवायिकारणलक्षणे वेगादिभिन्नत्वं देयम् । अर्थात्—तत्तत्का-

१—इष्टापत्तिरितिचेन्न,—तुरीतन्तुसंयोगादिनाशं पटादिनाशप्रसङ्गात्, असमवायिकारणनाशे कार्यनाश इति नियमात् । आत्मविशेषगुणानां कुत्राप्यसमवायिकारणत्वन्नास्तीति सिद्धान्तभङ्गप्रसङ्गाच्चेति ।

र्योऽसमवायिकारण—लक्षणे तत्तद्भिन्नत्वं देयं न तु सामान्यलक्षणे, तुरीतन्तुसंयोगादीनां तुरीपटसंयोगादिकं प्रति असमवायिकारणत्वस्वीकारात्। ज्ञानादिभिन्नत्वन्तु सामान्यलक्षणे देयमेव—आत्मविशेषगुणानां कुत्राप्यसमवायिकरणत्वाभात्।

तदिदमसमवायिकारणं द्विविधम्, (१) कार्यैकार्थप्रत्यासत्या समवायिकारणे प्रत्यासन्नं कारणमसमवायिकारणमिति प्रथमम्। यथा—घटादिकं प्रति कपालसंयोगादि, कार्येण—घटेन सह कारणस्य = (असमवायिकारणस्य) कपालसंयोगस्य एकस्मिन्—कपालरूपे पदार्थेऽस्ति प्रत्यासत्तिः। (२) कारणैकार्थप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणम्, यथा घटरूपं प्रति कपालरूपम् असमवायिकारणम्। तत्र स्वगतरूपादिकं प्रति असमवायिकारणं घटस्तेन सह कपालरूपस्य (असमवायिकारणस्य) एकस्मिन् कपाललक्षणे पदार्थे प्रत्यासत्तिरस्ति। तथा चेदम् असमवायिकारणस्य सामान्यलक्षणं पर्यवसन्नम्—'कार्यैकार्थकारणैकार्थान्यतर—प्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं ज्ञानादिभिन्नं कारणमसमवायिकारणमिति।

(१९) के नामाऽन्यथासिद्धाः ? तल्लक्षणं विशदीक्रियन्ताम्।

अन्यथासिद्धाः पञ्च। तथा हि—

१। यत्कार्यम्प्रति यस्य कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तद्रूपमन्यथासिद्धम्, यथा—घटम्प्रति दण्डत्वम्।

२—यस्य स्वातन्त्र्येणाऽन्वयव्यतिरेकौ न स्तः किन्तु कारणमादायैवाऽन्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्, यथा—घटम्प्रति दण्डरूपम्।

३—अन्यम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तत् तत्कार्यं प्रति अन्यथासिद्धम् यथा—घटादिकम्प्रत्याकाशः। आकाशस्याशब्दम्प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वस्य ग्राह्यत्वात्।

४—यत्कार्यजनकम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रति अन्यथासिद्धत्वम्, यथा-कुलालपितुर्घटम्प्रति।

५—अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धम्, यथा—घटम्प्रति गर्दभादि।

एतेषु हि पञ्चस्वन्यथासिद्धेषु पञ्चमोऽन्यथासिद्ध आवश्यकः तेनैव परेषां चरितार्थत्वात्, (तत्प्रपञ्चस्तु शिष्यबुद्धिवैशद्यार्थः)। यथा—दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे दण्डत्वादिकमन्यथासिद्धम्। न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात्[1]॥

२०"..................अथाऽऽकाशशरीरिणाम्।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते॥ इति

पादोनकारिका विशदं व्याख्यायताम्? पदकृत्यञ्चापि निरूप्यताम्।

आकाशात्मनाम् अव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च साधर्म्यमितिकारिकार्थः। तत्सङ्गमनञ्चेत्थम्—आकाशस्य हि विशेषगुणः शब्दः, स चाऽव्याप्यवृत्तिः (स्वसमानाधिकरण-निष्ठात्यन्ताभाव-प्रतियोगित्वमव्याप्यवृत्तित्वम्)। यदा किञ्चिदवच्छेदेन शब्द आकाशे उत्पद्यते तदाऽन्यावच्छेदेन शब्दाभावस्याप्याऽऽकाशे सत्त्वात्। क्षणिकत्वञ्च तृतीयक्षण-वृत्तिध्वंसप्रतियोगित्वम्, शब्दस्यापि योग्यविभुविशेषगुणत्वेन स्वोत्तरवर्तिगुणनाश्यत्वात्, तृतीयक्षणे नाश इति क्षणिकविशेषगुणोऽपि सः। तमादाय अव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिक-विशेषगुणवत्त्वञ्चाऽऽकाशे सङ्गच्छते।

एवम्—ज्ञानादिकमपि अव्याप्यवृत्तिविशेषगुणः क्षणिकविशेषगुणश्च। तथा हि—ज्ञानादिकं यदाऽऽत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽप्यस्त्येव। योग्यविभुविशेषगुणत्वेन स्वोत्तरवर्तिगुणनाश्यत्वात् क्षणद्वयावस्थायि च तदिति। तद् आदाय च भवत्यात्मनिलक्षणसमन्वयः।

---

१—केवलं द्रव्यस्य किं साधर्म्यम्? गुणकर्मणोश्च किं साधर्म्यम्? नित्यद्रव्यातिरिक्तानां पदार्थानां किं साधर्म्यम्? तत्सङ्गमयत। पृथिव्यादि—नवानां किं साधर्म्यम्? के मूर्ताः किन्नाम तन्मूर्तत्वं? प्रतिपादयत। कालाकाशात्मदिशां किं साधर्म्यम्? कानि भूतानि? किन्नाम भूतत्वम्? क्षित्यादिचतुर्णां किं साधर्म्यम्?

पृथिव्यादौ रूपादिविशेषगुणोऽस्तीत्यतिव्याप्तिवारणायाऽव्याप्यवृत्तीत्युक्तम्। पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीति पुनस्तत्रैवाऽतिव्याप्तिं निराकर्तुं विशेषगुण इति। क्षणिकविशेषगुणवत्त्वमित्यस्य च चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वमित्यर्थो बोध्यः। अन्यथा—रूपादीनामपि कदाचित्तृतीयक्षणनाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तं स्यात्। एतदर्थकरणे तु न दोषः। अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयन्तु न किमपि जन्यज्ञानं तिष्ठति। रूपत्वादिकन्तु क्षणचतुष्टयावस्थायिनि रूपादावपि वर्तते इति न तदादाय पृथिव्यादावव्याप्तिः। अथाऽस्य पदकृत्यम्—ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वात् ज्ञानत्वस्य च तद्वृत्तित्वादव्याप्तिः स्यादिति जन्येत्युक्तम्। यद्वाकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयम्, द्वेषत्वादिकमादाय लक्षणसमन्वयात्। परममहत्त्वस्यापि एतादृशक्षणिकगुणत्वात् द्वित्वादीनामपि चतुर्थक्षणे नाशाभ्युपगमेन तथात्वात् तदादाय काल-पृथिव्यादावतिव्याप्तिपरिहाराय विशेषेति [१]।

२१—पृथिव्याः किं लक्षणम्? कतिविधा च सा? भेदप्रभेद-प्रदर्शन-पूर्वकं सर्वं निरूपयत।

समवायेन गन्धवत्त्वं पृथिव्या लक्षणम्। न हि समवायेन गन्धोऽन्यत्र कुत्रापि विद्यते। पृथिव्यां च सर्वत्रापि विद्यते एवेति भवति लक्षणसमन्वयः। पृथिव्यां नानाविधं रूपं तिष्ठति, षड्विधश्च रसः, स्पर्शश्चास्य अनुष्णाशीतः।

सा चेयं पृथिवी द्विविधा नित्या अनित्या च। नित्या परमाणुरूपा, अनित्या द्व्यणुकादिरूपा सर्वापि, सैवाऽवयववतीत्युच्यते। अनित्या चापि त्रिविध-शरीररूपा, इन्द्रियरूपा, विषयरूपा च। तत्र शरीरमपि द्विविधम्—योनिजमयोनिजञ्च। योनिजञ्चापि द्विविधम्—जरायुजमण्डजञ्च।

---

१—पृथिवीजलतेजसां किं साधर्म्यम्?। पृथिवीतेजसोश्च किं साधर्म्यं? प्रदर्श्य सङ्गमयत। विशेषगुणयोगित्वं केषां साधर्म्यम्?। किं किं कस्य कस्य वैधर्म्यं भवति? कस्मिन् कस्मिन् द्रव्ये के के कति कति च गुणास्तिष्ठन्तीति? प्रतिपादयत। पृथिवीत्वजातिसिद्धावनुमानं प्रदर्शयत।

जरायुजं मनुष्य-पश्वादीनाम्, अण्डजं पक्षि—सर्पादीनाम्, अयोनिजं स्वेदजोद्भिज्जादिकम् । तत्र स्वेदजाः कृमिदंशाद्याः, उद्भिज्जास्तरुगुल्मादयः। पार्थिवम् इन्द्रियं घ्राणम् । विषयश्च द्व्यणुकादि—ब्रह्माण्डान्तं सर्वम् । उपभोगसाधनं हि विषयः, सर्वमेव हि कार्यजातमदृष्टाधीनम् । यत् कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा जनयत्येव। शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः ।

२१—पाषाणस्य पृथिवीत्वं साध्यताम् !

ननु—समवायेन गन्धवत्त्वं पृथिव्या लक्षणम् । पाषाणश्च गन्धशून्यः कथं पृथिवी स्यादस्ति च पृथिवी, गन्धवत्त्वलक्षणमव्याप्तमिति चेन्न—

अस्ति पाषाणेऽपि गन्धः, परन्त्वनुत्कटः, तथा च तस्य न प्रतीतिः। किं तत्सत्त्वे प्रमाणमितिचेत्—पृथिवीत्वहेतुकेनाऽनुमानेन सिद्ध्यति तत्र गन्धसत्ता "पाषाणो गन्धवान् पृथवीत्वात् पुष्पवत्" । न च तत्र पृथिवीत्वसत्त्वे किम्प्रमाणमिति वाच्यम्, पृथिवीत्वस्य तत्र युक्तिसिद्धत्वात् । पाषाणे पृथिवीत्वाऽनङ्गीकारे पाषाणभस्मनि गन्धानुपलब्धिः स्यात् । तथा चास्ति गन्धोपलब्ध्या पाषाणभस्मनि पृथिवीत्वम् । पाषाणे गन्धानुपलब्ध्या तत्र पृथिवीत्वसत्त्वे किम्मानमितिचेच्छृणु—'यद् द्रव्यं यद् द्रव्यध्वंसजन्यं तदुपादानोपादेय' मितिव्याप्त्या महापटध्वंसजन्ये खण्डपटे महापटोपादानोपादेयत्वंदृष्टम् । तथैव पाषाणध्वंसजन्ये पाषाण-भस्मनि पाषाणोपादानोपादेयत्वं सिद्धयतीति भस्मारम्भक-पाषाणारम्भक–परमाणूनामेकजातीयत्वात् पाषाणारम्भकपरमाणुषु पृथिवीत्वसिद्धौ परमाणुजन्ये पाषाणेऽपि सिद्धयति पृथिवीत्वम् । "पाषाणः पार्थिवः पार्थिवपरमाणुजन्यत्वात् घटवत्" इत्यनुमानम् । तथा च पूर्वोक्तानुमानं 'पाषाणो गन्धवान् पृथिवीत्वात् पुष्पवत्' इति सर्वथा निर्बाधम् ।

२२—अवयवि–सिद्धिः प्रदर्श्यताम् ।

ननु—नास्ति कश्चिद् अवयवी पदार्थः तत्सत्त्वे प्रमाणाभावात् । 'अयं घट' इत्यादिप्रतीतिस्तु परमाणुपुञ्जेऽप्युपपद्येत । यद्यपि परमाणवोऽप्रत्यक्षास्तथापि परमाणुपुञ्जभूतानां घटादीनां प्रत्यक्षं स्यादेव' यथैकस्य केशस्य दूरेऽप्रत्यक्षेऽपि तत्समूहस्य भवति प्रत्यक्षम् । न च

परमाणूनामणुपरिमाणविशिष्टत्वाद् बहुत्वाच्च 'एकः स्थूलो घटः' इति बुद्धेरनुपपत्तिः स्यादिति वाच्यम्; 'एको महान् धान्यराशि'रितिवत् तदुपपत्तेः। अर्थात्—यथा धान्यसमूहस्यैकत्वं महत्त्वञ्चादाय भवति व्यवहारो 'महान् धान्यराशि' रिति, तथाऽत्रापि स्यादेवेति पूर्वपक्षः—

अत्रोच्यते—घटादीनां परमाणुपुञ्जरूपत्वे स्वभावतोऽतीन्द्रियाणां परमाणूनां परस्पर-संयोगमात्रेण प्रत्यक्षयोग्यताऽभावे तत्समूहरूप-घटादेरपि कथं प्रत्यक्षं स्यात्। दूरादेरस्थ—केशदृष्टान्तस्तु नोपपद्यते, केशो हि नातीन्द्रियः पदार्थः, भवति सन्निधाने तत्प्रत्यक्षम्, परमाणवस्तु सर्वथाऽतीन्द्रियाः सन्निधानेऽपि तेषां प्रत्यक्षाभावात्। न च अदृश्यपरमाणुपुञ्जाद् भवति दृश्यपरमाणुपुञ्जस्योत्पत्तिरिति न प्रत्यक्षे कश्चिद् विरोध इति वाच्यम्,—अदृश्यस्य दृश्योत्पादकत्वाभावात्। अन्यथा चक्षुरूष्मादिसन्ततेरपि कदाचिद् दृश्यत्वं स्यात्। अतितप्त-तैलादौ स्थूलदहनोत्पत्तिस्तु तदन्तःपातिभिर्दृश्यदहनावयवैरेव भवति। नचैवं कथमदृश्येन द्व्यणुकेन दृश्यस्य त्रसरेणोरुत्पत्तिरितिवाच्यम्,—दृश्यत्वादृश्यत्वधर्मस्य स्वाभाविकत्वाऽनङ्गीकारात्। अर्थात् महत्त्वादि-कारणसमुदाये सति दृश्यत्वम्, तदभावे चाऽदृश्यत्वम्। एवञ्च त्रसरेणौ महत्त्वादि कारणसमुदायसत्त्वात् अस्ति प्रत्यक्षत्वम्। परमाणौ च तदभावात् नास्ति प्रत्यक्षत्वम्। तथा च परमाणुपुञ्जवादिमते 'अयं घटः' इत्यादिप्रतीतिर्दुरुपपादैवेति सिद्धोऽवयवी पदार्थः। भवन्ति च तेनैवोदकाहरणादयः सर्वे लोकव्यवहाराः॥

२४—परमाणुसिद्धौ का वाचोयुक्तिः?

अवयविनो हि पदार्थाः प्रत्यक्षत उत्पद्यन्ते विनश्यन्ति च तत-स्तेषामनित्यत्वम्। अवयविनो हि अवयववन्तः इत्यस्ति तेषामवय-वधारा, तस्याश्चानन्तत्वे स्याद् मेरुसर्षपयोः साम्यप्रसङ्गः। अर्थात् मेरुरवयवी पदार्थः, सर्षपोऽप्यवयवी पदार्थः यद्युभयोरप्यवयवधारा-ऽनन्ता किङ्कृतस्तयोर्भेदः 'मेरुरतिमहान् सर्षपश्चातिलघु'रित्यतोऽ-वयवधारायाः क्वचिद् विश्रामो वाच्यः। यत्र च विश्रामस्तन्नित्यम्, असमवेतभावकार्योत्पत्तिप्रसङ्गात्। अर्थात् यदि तद् अनित्यं स्यात्तदा तस्यापि किञ्चित् समवायिकारणं भवेदेव, अवयवाश्च तस्य न सन्ति, इति

कथं तस्य भावकार्यस्य कुत्राप्यसमवेतत्वेनोत्पत्तिः स्यात्। यत्र चेयम् अवयवधारा विश्राम्यति तत्रैवाऽणुपरिमाणतारतम्यमपि विश्राम्यतीति तस्य परमाणुत्वं सिद्ध्यति। तथाहि – महत्परिमाणतारतम्यं यथा गमनादौ विश्राम्यति, अणुपरिमाणतारतम्यमपि क्वचिद् विश्राम्येत, यत्र विश्रामः स एव परमाणुः। नचाऽवयवधारायाः त्रसरेणावेव द्व्यणुके एव वा विश्रामोऽस्त्विति वाच्यम्; उत्तरोक्तानुमानद्वयेन तत्तदवयवसिद्धेः। तथा हि–'त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवत्' 'द्व्यणुकाः सावयवा महदारम्भकत्वात् कपालवत्' इति। नचैवं क्रमेण परमाणोरप्यवयवधारा, सिद्ध्येदिति वाच्यम्—अनवस्थाभयेन तदसिद्धेः॥

२५—किन्नाम शरीरत्वम्? कथञ्च तल्लक्षणस्य नृसिंहशरीरे समन्वयः?

अनेकशरीरवृत्तिरपि शरीरत्वं धर्मो न जातिः पृथिवीत्वादिना साङ्कर्यात्¹। चेष्टाश्रयत्वं शरीरत्वमिति शरीरसामान्य-लक्षणम्। वृक्षादीनामपि चेष्टासत्त्वात् नाऽव्याप्तिर्लक्षणस्य। आध्यात्मिकवायु-(प्राणवायुः) सम्बन्ध एव वृक्षादीनां शरीरत्वे भानम्। भग्न-क्षत-संरोहणादिना हि वृक्षेषु आध्यात्मिक—वायुसम्बन्धोऽनुमीयते। यद्यपि हस्तादिः शरीरावयवोऽपि भवति चेष्टाश्रय इति स्यात्तत्रातिव्याप्तिः शरीरलक्षणस्य। तस्माद् अन्त्यावयवित्वे सति चेष्टाश्रयत्वमिति परिष्करणीयं लक्षणम्। यदि तु हस्तादिरपि शरीरत्वेन व्यवह्रियेत तदा तु नास्त्येव कश्चिद् दोष इति न तथा परिष्कारापेक्षा। अथ यत्र शरीरे चेष्टा नास्ति तत्राऽव्याप्तिरिति चेत्, तादृशस्य शरीरत्वे एव किम्प्रमाणम्। शरीरव्यवहार एव प्रमाणमिति चेत्, जातिघटितं लक्षणं क्रियताम्—चेष्टावदन्त्यावयवि-वृत्ति-द्रव्यत्व-व्याप्यजातिमत्त्वम्²। मानुषत्व-चैत्रत्वादि जातिमादाय भविष्यति सर्वत्र लक्षणसमन्वयः।

---

१—पृथिवीत्वधर्मं त्यक्त्वा शरीरत्वं धर्मः जलादि-शरीरेष्वपि वर्तते, एवं शरीरत्वधर्मं त्यक्त्वा पृथिवीत्वं घटादौ वर्तते, मानुषादिशरीरेऽनयोः समावेशः।

२—चेष्टावदन्त्यावयविनि वर्तमाना या द्रव्यत्वव्याप्या मानुषत्वादिजातिः तादृशजातिमत्त्वम्।

नृसिंहशरीरे लक्षणसमन्वयः—

ननु—इदं शरीरलक्षणं नृसिंहशरीरे कथं समन्वियात्, नहि तत्र नृसिंहत्वं जातिरेकव्यक्तिवृत्तित्वात् । नापि देवत्वं जातिः तेजस्त्वादिना [1]साङ्कर्याद् इति चेन्न,कल्पभेदेन नृसिंहशरीराणि अनेकानि अनेकव्यक्तिवृत्तितया च सिद्ध्यति नृसिंहत्वं जातिस्तथा च नृसिंहत्वं जातिमादाय भविष्यति नृसिंहशरीरेऽपि शरीरलक्षणसमन्वयः ।

२६—घ्राणेन्द्रियस्य पार्थिवत्वं सोपपत्तिकं साधयत ।

घ्राणेन्द्रियं हि न गन्धवत्त्वं प्रतीयते येन तस्य पृथिवीत्वं प्रत्यक्षतः सिद्ध्येत् । प्रत्युत तस्य पृथिवीत्वेन गन्धवत्त्वं साध्यते । भवति तत्राऽयं प्रश्नो घ्राणेन्द्रियस्य पार्थिवत्वं कथमितिचेत्—

तत्रोच्यते—'घ्राणेन्द्रियस्य पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् यद् यद् रूपादिषु मध्ये केवलं गन्धस्यैव व्यञ्जकं तत् तत् पार्थिवं यथा कुङ्कुमगन्धाभिव्यञ्जकं गोघृतम् । न च दृष्टान्ते गोघृतस्य स्वकीयरूपादिव्यञ्जकत्वात् दृष्टान्ताऽसिद्धिरिति वाच्यम्, 'गन्धस्यैव व्यञ्जकत्व'मित्यस्य परकीयरूपाद्यव्यञ्जकत्वे तात्पर्यात् । न चैवं नवशरावगन्धव्यञ्जकजले (तस्य परकीयरूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेन) हेतोरनैकान्तिकत्वमिति वाच्यम्, तस्य सक्तुरसाभिव्यञ्जकत्वेन परकीयरूपाद्यव्यञ्जकत्वाभावात् ।

[ अथवा हेतौ परकीयेति न देयम्, वायूपनीतः सुरभिभागश्च दृष्टान्तो गृह्यताम् । घ्राणेन्द्रियसन्निकर्षस्य केवलं गन्धव्यञ्जकत्वात्तत्र व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणीयम् । (सन्निकर्षो न द्रव्यम् ।) तथाचायमनुमानप्रकारः—"घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् वायूपनीत-सुरभि-भागवत्" इति ।[2] ]

१—देवत्वधर्मं त्यक्त्वा तेजस्त्वधर्मः सुवर्णादितैजसपदार्थेऽपि वर्तते, एवं तैजसत्वधर्मं त्यक्त्वा देवत्वं जलीयद्रव्येष्वपि वर्तते, उभयोः समावेशः तैजसदेवशरीरेषु ।

२—किन्नाम जलत्वम्? । कीदृशाश्चात्र रूपरसादयः? । कतिविधं जलम्? तद्भेदप्रभेदादीन् निरूपयत । एतदुत्तरञ्च पृथिवीनिरूपणोत्तरवद् बोध्यम् ।

२७—जलत्व-जाति-सिद्धि-प्रकारः प्रदर्श्यताम् ?

जलत्वजातिसिद्धावनुमानं प्रमाणम् । तथाहि—"समवायसम्बन्धावच्छिन्न-स्नेहत्वावच्छिन्न-स्नेहनिष्ठकार्यतानिरूपिता तादात्म्य-सम्बन्धावच्छिन्ना जलनिष्ठा या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपित-दण्डगत-कारणतावत्" इत्यनुमानेन स्नेहसमवायिकारणतावच्छेदकतया अन्यूनानतिरिक्त-वृत्ति जलत्वं जातिः सिद्धयति । अत्र स्नेहत्वस्य नित्यानित्यवृत्ति-तया कार्यतावच्छेदकत्वाभावेऽपि जन्यस्नेहत्वस्य तथात्वं बोध्यम् । नन्वेवञ्चेत्, जन्यस्नेह-समवायिकारणताऽवच्छेदकतया सिद्धा जलत्वजातिः परमाणौ न तिष्ठेत्, तत्र जन्यस्नेहाभावात् । नित्यस्य च स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न—जन्यस्नेहजनक-तावच्छेदकतया सिद्धयति जन्यजलत्वं जातिः । ततश्च जन्यजलत्वा-वच्छिन्न-जनकतावच्छेदकतया सिद्धयति शुद्धजलत्वं जातिः, सा च पर-माणावपि तिष्ठत्येव । एषोऽत्रानुमानप्रकारः—"समवायसम्बन्धाव-च्छिन्न-जन्यजलत्वावच्छिन्न-जन्यजलनिष्ठ-कार्यतानिरूपिता तादात्म्य-सम्बन्धावच्छिन्ना या नित्यजलनिष्ठा कारणता सा किञ्चिद्धर्माव-च्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपित-दण्डगतकारणतावत् ।

२८—जले शुक्ल एव वर्णः, मधुर एव रसः, शीतल एव स्पर्शः इति त्रितयमेव सम्यक् प्रतिपाद्यताम् ।

शुक्लमेव रूपं जले—

शुक्लरूपत्वं न जलस्य लक्षणम् । तथा सति स्फटिकादौ स्याद-तिव्याप्तिः । जले शुक्लरूपमेव भवतीतिदर्शयितुमुक्तम्-वर्णः शुक्ल इति । लक्षणकरणे चेदाग्रहस्तर्हि जातिघटितं तत् क्रियताम्—[१] नैमि-त्तिक-द्रवत्ववदवृत्ति-रूपवद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्य-जातिमत्त्वमिति । एवमपि स्फटिकादौ नातिव्याप्तिः स्फटिकत्वादेः द्रव्यत्व-साक्षाद्व्या-

---

१—नैमित्तिकद्रवत्ववती पृथिवी-तेजसी तत्राऽवर्तमाना रूपवद्वृत्तिः द्रव्यत्वस्य साक्षाद्व्याप्या जातिर्जलत्वमेव तद्वत्त्वं शुक्लरूपवत्त्वपदेन विवक्षितमित्यर्थः ।

प्यत्वाभावात्, पृथिवीत्वस्य च नैमित्तिकद्रवत्ववदवृत्तित्वाभावात्। ननु—जले शुक्लरूपवत्त्वमेव कुतः कालिन्दीजलादौ नीलरूपाद्युपलब्धेरिति चेन्न—नीलरूपजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावात् जले नीलरूपाऽसम्भवात्। कालिन्दीजले नीलरूपप्रतीतिस्तु अधिकरणोपाधिकृता। अत एव वियति विक्षेपे भवति श्वेतरूपोपलब्धिः।

जले मधुर एव रसः

जले न तिक्तादिरिति प्रदर्शनायोक्तं मूले—जले मधुर एवेति। लक्षणत्वे तु तथैव जातिघटितं क्रियताम्, यथा-तिक्तरसवदवृत्ति-मधुरवद्वृत्ति द्रव्यत्व-साक्षाद्व्याप्यजातिमत्त्वमिति। एवं हि न शर्करादावतिव्याप्तिः शर्करात्वादेर्द्रव्यत्वव्याप्याभावात् पृथिवीत्वस्य च तिक्तरसवदवृत्तित्वाभावात्। ननु जले माधुर्ये किम्मानं प्रत्यक्षतस्तु न तत्र कोऽपि रसोऽनुभूयते। नारिकेलजलादौ माधुर्योपलब्धिस्तु आश्रयोपाधिकी। अन्यथा—जम्बीररसादौ अम्लाद्युपलब्धेरम्लादिरसवत्त्वमपि जलस्य स्यादिति चेच्छृणु—अस्ति जले मधुरो रसः उद्बोधकाभावान्न प्रतीयते। हरीतक्यादिभक्षणं तदुद्बोधकम्। अत एव हरीतक्यादिभक्षणानन्तरं स्पष्टमनुभूयते जलस्य मधुरो रसः। न च जलोष्मसंयोगाद् हरीतक्यामेव स्याद् रसान्तरोत्पत्तिरिति वाच्यम्,—कल्पनागौरवात्। तेजःसंयोगो हि रसान्तरोत्पादको मन्यते, न तु जलोष्मसंयोगोऽपीत्यभिनव-कार्यकारणभाव-कल्पनागौरवं स्पष्टमेव। जम्बीररसादावम्लत्वप्रतीतेर्जलेऽम्लादिकमपि स्यादिति नोट्टङ्कनीयम्,—अम्लादिजनकतावच्छेदिकायाः पृथिवीत्वजातेर्जलेऽभावात् जले नाऽम्लादिकम्। जम्बीररसादौ तथा प्रतीतिस्तु आश्रयोपाधिकी न तु वास्तविकी।

जले शीत एव स्पर्शः—

जलं विहाय शीतस्पर्शो हि न कुत्रापि वर्तते। न च घृष्टचन्दनादौ भवति शैत्योपलब्धिरिति वाच्यम्,—तस्या अपि चन्दनान्तर्वर्तिशीततरसलिलनिष्ठत्वात्। तेजःसंयोगाद् जले उष्णत्वप्रतीतिरपि तेजःसंयोगरूपोपाधिकृतैव न तु वास्तविकी जले पाकाऽसम्भवात्[1]।

१—रसनाया जलीयत्वं साध्यताम्। हिमकरकादीनां जलत्वं साध्यताम्। किन्नाम तेजस्त्वम्। कतिविधञ्च तत्। भेदप्रभेदादिनिरूपणं कुरुत। चक्षुषस्तैजस्त्वं साधयत।

२९—सुवर्णस्य तैजसत्वे किम्प्रमाणं ? स्फुटं प्रतिपाद्यताम् ।

ननु—नैमित्तिकद्रवत्वात् गुरुत्वात् पीठरूपाश्रयत्वाच्च सुवर्णस्य पार्थिवत्वं प्रतीयते इति कथमुक्तम् 'वह्नि—स्वर्णादिर्विषयो मतः' इत्यत्र सुवर्णस्य तैजसत्वमिति चेन्न, अनुमानप्रमाणेन तैजसत्वसिद्धेः। तथाहि—'सुवर्णं तैजसम्, अत्यन्ताऽनलसंयोगेऽप्यनुच्छिद्यमान-जन्यद्रवत्वात्, यन्नैवं तन्नैवं, यथा पृथिवी" अत्यन्तानलसंयोगे हि पृथिवीद्रवत्वं जन्यजल-द्रवत्वञ्च विनश्यति, सुवर्णद्रवत्वन्तु तथैव तिष्ठति न विनश्यतीति सिद्ध्यति तस्य तैजसत्वम्। न च पीतरूप-गुरुत्वाश्रयस्य सुवर्णे विद्य-मानस्य पार्थिवभागस्याऽपि तदानीं द्रुतत्वात् तेन व्यभिचारः स्याद् इति वाच्यम्,—जलमध्यस्थ-मसोक्षोदवत् तस्य ( पार्थिवभागस्य ) अद्रुतत्वात्।

( केचिच्च—सुवर्णस्य तैजसत्वेऽनुमानान्तरमाचक्षते। ते च पीति-माश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपाऽपरावृत्तिदर्शनात् तत्प्रतिबन्धकं विजातीयं द्रवद्रव्यं कल्पयन्ति। तदनुमानस्वरूपञ्चेत्थम्—"पीतिमगुरुत्वाश्रयो विजातीय-रूपप्रतिबन्धक-द्रवद्रव्यसंयुक्तः अत्य-न्ताग्निसंयोगे सत्यपि विजातीयरूपानधिकरणत्वात् जलमध्यस्थपीत-पटवत्"। तच्च द्रवद्रव्यं न पृथिवी न वा जलम्, तयोरेवंविधत्वाभावात्। पृथिवीजलभिन्नस्य तस्य सिद्ध्यति तैजसत्वम्[1] )।

३०—आकाश-सिद्धिप्रकारो विशदं प्रतिपाद्यताम्।

समवायेन शब्दाश्रयत्वम् आकाशत्वमित्याऽऽकाशलक्षणम्। ननु आकाश एव नास्ति तावत्कश्चित्पदार्थः कुतस्तरां तल्लक्षणप्रसङ्ग इति चेन्न—

प्रत्यक्षप्रमाणाऽसिद्धत्वेऽपि तस्याऽनुमानप्रमाणसिद्धत्वात्। तथाहि-गुणो हि भवति द्रव्यसमवेतः शब्दोऽपि गुणः, न स केवलं गुणोऽपि तु विशेषगुणः। ततस्तेनापि क्वचिद् द्रव्ये समवेतेन भाव्यम्। नच पृथिवी-जल-तेजोवायवस्तदाश्रयाः सम्भवन्ति। तस्य अग्निसंयोगाऽसमवायि-कारणकत्वाभावात्. अकारणगुणपूर्वक-प्रत्यक्षत्वाच्च। नापि स

---

१—किन्नाम वायुत्वम् ? वायोः प्रत्यक्षं भवति न वा ?, अनुमानञ्चे-त्कथम् ?, भेदप्रभेदाश्च तस्य के ?, प्राणादिवायुनिरूपणञ्च कुरुत। त्वगिन्द्रियस्य वायवीयत्वं साध्यताम्।

दिक्कालमनसां गुणो भवितुमर्हति विशेषगुणत्वात् । नहि कोऽपि विशेषगुणः सन् दिक्कालमनस्सु वर्तते । न च शब्द आत्मविशेषगुणः स्यादिति वाच्यम्,—बहिरिन्द्रियग्राह्यत्वेन आत्मविशेषगुणत्वाभावात् । नहि कश्चिद् आत्मविशेषगुणो बहिरिन्द्रियेण गृह्यते । अयञ्च बहिरिन्द्रियग्राह्यो विशेषगुण इति सिद्धयति नाऽऽत्मनो विशेषगुणः । अतश्च तदाश्रयत्वेन गगनात्मकं नवमं द्रव्यं कल्प्यते । तत्रायमनुमानप्रयोगः "शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् यन्नैवं तन्नैवं यथा रूपादि" ॥

प्रकारान्तरेणाऽऽकाशसिद्धिस्त्वेवम्—

"शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्य—बहिरिन्द्रियग्राह्य—जातिमत्त्वात् स्पर्शवत्" इत्यनुमानेन शब्दस्य विशेषगुणत्वं वियति । यो हि, विशेषगुणः स गुणस्तु भवत्येव । तथा च तस्य 'शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत् इत्यनुमानेन द्रव्यसमवेतत्वे सिद्धे तदाश्रयत्वेन पृथिवीजलतेजोवायवः प्राप्नुवन्ति । तत्रोच्यते—"शब्दो न स्पर्शवतां विशेषगुणः अग्निसंयोगाऽसमवायिकारणकत्वाभावे सति अकारण—गुण पूर्वक—प्रत्यक्षत्वात् सुखवत्" । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं, पटरूपादौ व्यभिचारवारणाय अकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । नचापि शब्दः दिक्कालमनसां गुणो विशेषगुणत्वात् रूपादिवत् । नाऽऽत्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वात् स्पर्शवत् । इत्थञ्च शब्दाश्रयत्वेन प्राप्तेष्वष्टसु द्रव्येषु निराकृतेषु शब्दाधिकरणं नवमं द्रव्यम् आकाशात्मकं सिद्धयति । "शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् यन्नैवं तन्नैवं यथा रूपादि" [1]।

२१—आत्मत्वजातिः कथं सिद्धयति ? ईश्वरे सा जातिरस्ति न वा ?

---

१—किन्नाम कालत्वम् ?, तत्सिद्धिश्च कथम् ?, क्षणादिव्यवहारश्च तत्र कथम् ?, क्षणादिव्यवहारे उपाधिस्वरूपं किम् ?' किन्नाम दिक्त्वम् ?, प्राच्यादिभेदश्च कथं ? तत्र सर्वमुपपाद्यताम् ।

इन्द्रियाद्यधिष्ठाता आत्मा स द्विविध आत्मा परमात्मा=[ ईश्वरः ] चेति । आत्मत्वजातिश्च सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । तत्रे दमनुमानम् - "समवायसम्बन्धावच्छिन्न—सुखनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना आत्मनिष्ठा या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपित–दण्डगत-कारणतावत्" स च धर्मः अन्यूनानतिरिक्तवृत्तित्वेन आत्मत्वजातिरूप एव । 'आत्मा वारे द्रष्टव्यः' इत्यादिश्रुतिषु ईश्वरेऽपि आत्मशब्दप्रयोग-दर्शनात् सा जातिरीश्वरेऽप्यस्त्येव । न चैवं सति सुखदुःखाद्युत्पत्तिर-पीश्वरे स्यादिति वाच्यम्,—अदृष्टादिरूपकारणभावेन ईश्वरे सुखदुः-खाद्यनुत्पत्तेः । 'नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावः' इति नियमस्तु जलपरमाणौ स्नेहानुत्पत्त्या अप्रयोजकत्वेनाऽऽनित्यः । अपरे तु—सुखादि-कारणातावच्छेदकतया सिद्धाऽऽत्मत्वजातिरीश्वरे नास्त्येव प्रमाणाभावा-दिति वदन्ति । तथा सति [ ईश्वरस्याऽनात्मत्वे ] दशमद्रव्यत्वापत्तिस्तु न, ज्ञानवत्त्वमात्मत्वमिति कृत्वा ईश्वरस्यापि ज्ञानवत्त्वेनाऽऽत्मत्वात् नवद्रव्याणीति विभागस्य समुचितत्वात् ।

३२—आत्मसद्भावे किम्प्रमाणमिति विविच्योपपाद्यताम् ।

आत्मा हि शरीरस्येन्द्रियाणाञ्च साक्षात् परम्परया वा चैतन्य-सम्पादकः । शरीरादिकमचेतनमिति चेतनाधिष्ठितेन केन भवितव्यम् । अचेतनं चेतनाधिष्ठितं सदैव कार्यं करोतीति नियमात् । स चेतन आत्मा तस्य स्वशरीरे वर्तमानस्य यद्यपि 'अहं जाने' अहं सुखी इत्यादिरूपेण भवति मानसं प्रत्यक्षम् इति न तत्र प्रमाणान्तरापेक्षा । तथापि स्वीयानुभवविषयीभूते शरीरादिभिन्ने आत्मनि विप्रतिपन्नो युक्त्यैव बोधनीय इति तत्सिद्धावनुमानं प्रमाणं प्रदर्श्यते—करणं हि सकर्तृकमिति, यथा छिदादिकरणानि कुठारादीनि कर्त्तारमन्तरेण न फलं जनयन्ति तथा चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्त्तार-मन्तरेण नोपपद्यते इत्यतिरिक्तः कर्त्ता कल्प्यते । स चैवाऽऽत्मा, तत्रायमनु-मानप्रयोगः—"इन्द्रियाणि सकर्तृकाणि करणत्वात् कुठारादिवत्" ।

३३—चार्वाकसम्मतो देहात्मवादः परीक्ष्य निरस्यताम् ।

ननु—देह एव आत्मा चैतन्यं तस्यैव धर्मः। स एव कर्त्ता न कश्चिद् देहातिरिक्त आत्मेति चेन्न।

मृतशरीरेषु व्यभिचारदर्शनात्। अर्थात् मरणानन्तरमपि शरीरन्त्वस्त्येव तस्यैव चैतन्ये कुतो न तत्र तदा ज्ञानेच्छादीनि प्रवर्त्तन्ते इति ज्ञायते शरीरभिन्नः कश्चिच्चेतन इति। न च ज्ञानादिकमेव हि चैतन्यं तच्च मुक्तात्मनां त्वन्मतेऽपि शरीरादिसम्बन्धाभावान्नास्ति, तथास्मन्मतेऽपि मृतशरीरे ज्ञानाद्यभावे का क्षतिरिति वाच्यम्, शरीरस्य चैतन्ये एतद्दोषसमाधानेऽपि दोषान्तरस्याऽसमाधानात्। तथाहि—यदि शरीरमेव चेतनं तदा बाल्ये विलोकितस्य यौवने स्थाविरे वा स्मरणं न स्यात्, शरीरभेदात्। नहि अन्येन दृष्टस्याऽन्यः स्मर्त्ता भवति, यथा चैत्रदृष्टं मैत्रो न स्मरतीति। न च बाल्य-यौवन-वार्धक्येषु शरीरमेकमेवेति वाच्यम्—उपचयाऽप—चयादि-परिमाणभेदेन द्रव्यभेदस्याऽऽवश्यकत्वात्। न च पूर्वशरीरोत्पन्नसंस्कारे शरीरान्तरे संस्कार उत्पद्यते इति न स्मरणानुपपत्तिरिति वाच्यम्,—अनन्तसंस्कारकल्पने गौरवात्, मातृदृष्टपदार्थानां पुत्रेण स्मरणाप्रसङ्गाच्च।

किञ्च—एवं शरीरस्य चैतन्ये जातमात्रस्य बालकस्य स्तन्यपानादौ वानरशिशूनाञ्च गर्भनिःसृतमात्राणां शाखावलम्बने प्रवृत्तिर्न स्यात्। तत्कारणस्य इष्टसाधनताज्ञानस्य तदानीमभावात्। मन्मते तु जन्मान्तरानुभूतेष्टसाधनतायास्तदानीं स्मरणादेव प्रवृत्तिः। जीवनादृष्टमेव च तदुद्बोधकम्। अन्यस्य तु जन्मान्तरानुभूतस्य उद्बोधकाभावान्न स्मरणम्। न हि उद्बोधकं विना पूर्वानुभवस्तत्संकारो वा स्मृतिं जनयति। एवं यथाऽत्र जातमात्रो बालकः पूर्वानुभूतेष्टसाधनतास्मरणात् स्तन्यपाने प्रवर्तते, तथा पूर्वपूर्वजन्मस्वपि, इति संसारस्यानादितयाऽऽत्मनोऽनादित्वे सिद्धेऽनादिभावस्य च नाशासम्भवात् नित्यत्वं सिद्ध्यति॥

२४—इन्द्रियात्मवादं मन आत्मवादञ्च प्रदर्श्य निराकुरुत।

ननु—इन्द्रियाणां चक्षुरादीनामेव ज्ञानादिकं प्रति कारणत्वं कर्तृत्वञ्चास्तु एकत्राधिकरणे कर्तृत्व-करणत्वयोर्वृत्तौ नास्ति खलु

विरोधे किञ्चित्प्रमाणं कर्तृत्व-करणत्वलक्षणोपाधिभेदात् एकस्मिन्नपि कर्तृकरणादिव्यवहारभेदोपपत्तेरिति चेन्न—पूर्वं चक्षुरादिनाऽनुभूतस्य चक्षुरादिविनाशे स्मरणानुपपत्तेरनुभवितुरभावात् । चक्षुर्दृष्टं हि चक्षुरेव स्मरेत् नाऽन्यदृष्टमन्यः स्मरति, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावात् ।

मनसश्चैतन्यनिरासः—

ननु—चक्षुरादीनि हि विनाशीनि तेषां चैतन्ये भवति स्मरणाद्यनुपपत्तिः, मनस्तु नित्यम् अविनाशि, तस्यैव चैतन्यं स्यात्, किं तदतिरिक्तात्मकल्पनेनेति चेन्न—मनसश्चैतन्ये ज्ञानसुखादीनां प्रत्यक्षत्वाऽनापत्तेः । अर्थात्—यदि आत्मा कश्चित् पदार्थो नास्ति तत्स्थानं मन एव चेतनं कर्तृ च स्वीक्रियते तदाऽऽत्मधर्मत्वेनाऽभिमता ज्ञानसुखादयोऽपि मनोधर्मा एव मन्तव्याः, मनसश्चाणुत्वात् कस्य महत्त्वमादाय सुखादीनां प्रत्यक्षं स्यात् । प्रत्यक्षे च सर्वत्रापि भवति महत्त्वं कारणम् । अतिरिक्तात्मस्वीकारे तु आत्मनो महत्त्वमादाय भवत्येव प्रत्यक्षं सुखादीनाम् ।

३५—बौद्धसम्मतं क्षणिकविज्ञानाऽऽत्मवादमाशंक्य निराकुरुत ।

ननु—विज्ञानमेवात्मा, तच्च स्वतः प्रकाशम्=प्रकाशान्तरापेक्षारहितम् । अत एव चेतनम्, ज्ञानसुखादिकञ्च तस्यैवाकारविशेषः । यत् सत् तत् क्षणिकमिति नियमात् । तद् विज्ञानमपि सत्त्वात् क्षणिकम् । तच्च द्विविधं प्रवृत्तिविज्ञानम् आलयविज्ञानञ्च, 'अयं घटः'—इत्यादिप्रवृत्तिविज्ञानम् 'अयमहम्' इत्याकारकमालयविज्ञानम् । पूर्वपूर्वविज्ञानमुत्तरोत्तरविज्ञाने हेतुरिति नियमेन सुषुप्तौ ( प्रवृत्तिविज्ञानाभावेऽपि ) आलयविज्ञानधारा अस्त्येवेति न व्यभिचारः । क्षणिकत्वेऽपि पूर्वपूर्व-विज्ञानजनित-संस्काराणामुत्तरोत्तर-विज्ञाने ( मृगमदवासनावासितवसने इव ) सङ्क्रमणं भवतीति नानुपपत्तिः स्मरणादेरिति चेन्न—

ज्ञानं हि सविषयं भवतीति नियमात्, इदमात्मत्वेन भवतोऽभिमतं क्षणिकविज्ञानं किंविषयकम् ? जगद्विषयकं यत्किञ्चिद्विषयकं वा, जगद्विषयकत्वे सर्वज्ञत्वापत्तिः यत्किञ्चिद्विषयकत्वे च घटविषयकत्वं वा स्यात् पटविषयकत्वं वा स्यात् इत्येकतरपक्षसाधकयुक्ते-

  

रभावात् विनिगमनाविरहः। क्षणिकविज्ञानस्यात्मत्वे सुषुप्तिकालेऽपि स्याद् विषयावभासो ज्ञानस्य सविषयत्वात्। सुषुप्तिकाले निर्विषया ज्ञानसन्ततिरनुवर्तते इति चेत्? तस्याः स्वप्रकाशत्वे नास्ति किञ्चित् प्रमाणम्। प्रमाणं विनैव ज्ञानस्वरूपतास्वीकारे घटादीनामपि ज्ञानत्वापत्तिः। विज्ञानव्यतिरिक्तवस्तुनोऽभावादिष्टापत्तिरिति चेत्! प्रत्यक्षानुभूयमानस्य घटादेरपलापः कथं शक्यः कर्तुम्। घटादेर्विज्ञानाकारविशेषत्वे किमयमाकारो व्यतिरिच्यते विज्ञानाद् न वा? व्यतिरिच्यते चेत्? सिद्धं विज्ञानव्यतिरिक्तं वस्तु। नातिरिच्यते चेत्? तर्हि 'इमे नीलपीते' इत्याकारकसमूहालम्बनज्ञाने नीलाकारोऽपि पीताकारः स्यात् स्वरूपतो विज्ञानस्याऽभेदात्। न च अपोहरूपः (अतद्व्यावृत्तिरूपः) नीलत्वादिविज्ञानधर्मः[1] इति वाच्यम्—नीलत्वादीनां विरुद्धानामेकस्मिन् असमावेशात्। विरुद्धयोरेकस्मिन् समावेशे हि विरोधावधारणमेव दुरुपपादं स्यात्। पूर्वविज्ञान-संस्काराणामुत्तरोत्तर-सङ्क्रमणमपि न सम्भवति। मातापुत्रयोः संस्कारसङ्क्रमणप्रसङ्गात्। उपादानोपादेयभावस्य नियामकत्वाऽङ्गीकारेऽपि वासनायाः (संस्काराणां) सङ्क्रमणस्याऽसम्भव एव। उत्तरस्मिन् उत्पत्तिरेव हि सङ्क्रमः, नास्ति कश्चित्तत्र तदुत्पादकः। ज्ञानानामेवोत्पादकत्वे तु स्यादानन्त्यप्रसङ्गः। न च क्षणिकविज्ञाने संस्कारोत्पादकोऽतिशयविशेषः=शक्तिविशेषः कल्प्यते इतिवाच्यम्, तत्र प्रमाणाभावात् कल्पनागौरवाच्च। न च क्षेत्रस्थ-बीजात् अङ्कुरोत्पत्तिर्न कुसूलस्थबीजात्, इत्यङ्कुरत्वावच्छिन्नं प्रतिकुर्वद्रूपत्वेन=अङ्कुरजननयोग्यजातिविशेषरूपेण यथा कारणता मन्यते, तथाऽत्रापि प्रतिविज्ञानं कुर्वद्रूपत्वेन=उत्तरोत्तरवासना-जनकजातिविशेषरूपेण कारणता स्यादिति वाच्यम्, बीजादावपि धरणी-सलिल-संयोगादि-सहकारिकारणसत्वाभ्यामेव निर्वाहे कुर्वद्रूपत्वाऽकल्पनादिति।

१६—वेदान्तिसम्मतं नित्यविज्ञानात्मवादं प्रतिपाद्य निराकुरुत।

नित्यविज्ञानमेवाऽऽत्मा। आत्मनो विज्ञानत्वे नित्यत्वे च श्रुतिः प्रमाणम् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अविनाशी वाऽरे अयमात्मे'त्यादि। इति वेदान्तिनां मतम्।

१—नीलाकारपीताकारौ अभिन्नौ एव। भेदप्रतीतिस्तु नीलत्वपीतत्वयोर्धर्मयोर्भेदादिति तात्पर्यम्।

तत्रोच्यते—विज्ञानं नित्यं स्यादनित्यं वा सविषयमेव स्यात्, तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः यत्किञ्चिद्विषयकत्वे विनिगमनाभावः। निर्विषयस्य च ज्ञानत्वव्याघातः। (किञ्च ज्ञानस्याऽऽत्मत्वे ज्ञानात्मशब्दयोः पर्यायत्वात् 'घटविषयकं ज्ञान' मितिवत् 'घटविषयकोऽहं'मित्यनुभवाऽऽपत्तिः स्यात् 'घटज्ञानवानहं'मिति सर्वानुभवस्याऽपलापश्चापद्येत ) तस्माज्ज्ञानाभिन्नो नित्य आत्मेति सिद्धयति । 'सत्यं ज्ञानमनन्त'मिति श्रुतिस्तु ब्रह्मपरा न जीवात्मपरा। न च जीवेश्वरयोरभेद इति वाच्यम्,—कश्चित् सुखी कश्चिद् दुःखीत्यादिदर्शनात् जीवानां परस्परभेदस्य सिद्धत्वात् सुतरामीश्वरभेदः' सिद्धयति। अभेदस्वीकारे हि बन्धमोक्षव्यवस्था व्याहन्येत। न च तत्त्वमस्यादिश्रुतिरेव जीवेश्वरयोरभेदे मानमिति वाच्यम्-तस्या श्रुतेः भेदेऽपि उपासनायां 'मनो ब्रह्मे'त्यादिवत् अभेदभावनयैवोपासितव्यमित्यत्र तात्पर्यात्। अत एव 'सर्वं एवाऽऽत्मनि समर्पिताः' इति श्रुतिरपि सङ्गच्छते।

( अथ विशेषः )

( नच संसारदशायां जीवेश्वरयोर्भेदेऽपि मुक्तिदशायामभेदो जायते इति वाच्यम्—भेदस्य नित्यत्वेन नाशायोगात् ब्रह्मातिरिक्तस्य सर्वस्यापि अनित्यत्वात् भेदस्यापि नाश इति चेत् ?, भेदनाशेऽपि पूर्वावस्थितव्यक्तिद्वयावस्थानस्याऽनिवार्यत्वात्। नच तदानीं द्वित्वस्यापि नाशात् व्यक्तिद्वयावस्थानं न सम्भवतीति वाच्यम्-'एकमेवाऽद्वितीय' मित्यादि श्रुत्या निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि तस्य सत्यस्वरूपाङ्गीकारवत् द्वित्वाभावेऽपि तयोर्व्यक्तिद्वयात्मकं तदिति वक्तुं शक्यत्वात्। न च मिथ्यात्वाभावोऽधिकरणस्वरूपो ब्रह्मणि सत्यत्वमिति वाच्यम्,—अत्रापि एकत्वाभावस्य व्यक्तिद्वयात्मकस्य द्वित्वस्वरूपस्य वक्तुं शक्यत्वात्। प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवत्, 'उभयकं नैक'मित्यस्य सर्वजनसिद्धत्वात्। न च ब्रह्मविद् ब्रह्मैव भवती'ति तयोरभेदः प्रमाणसिद्ध इति वाच्यम्, सम्पदाधिक्ये पुरोहितेऽपि राजत्वव्यवहारवत् निर्दुःखत्वादिना जीवस्येश्वरसाम्यबोधने तात्पर्यात्। अत एव 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्या स्पष्टं प्रतिपाद्यते साम्यम्। 'द्वा सुपर्णा—द्वे ब्रह्मणी वेदितव्ये' इत्यादि—श्रुतयश्च स्पष्टं जीवेश्वरभेदं प्रतिपादयन्ति । ननु

 

मा भूज्जीवस्य ज्ञानरूपत्वमीश्वरस्य तु तत्स्याद् 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति श्रुत्यनुरोधात् इति चेन्न—'यः सर्वज्ञः स सर्ववित्' इति श्रुत्यैकवाक्यतया सत्यं ज्ञानमिति श्रुतौ ज्ञानशब्दस्य ज्ञानाश्रय इत्यर्थत्वात् । अन्यथा 'नित्यं विज्ञान-मानन्दं ब्रह्मे' त्यादौ 'आनन्दम्' इत्यत्र घञन्तत्वेन पुल्लिङ्गत्वापत्तिः स्यात्, तदाश्रयत्वस्वीकारे तु 'अर्श' आदित्वात्, अचि प्रत्यये न काचिदापत्तिः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखित्वप्रत्ययात् असुखमिति श्रुतेः । न सुखम् असुखमिति तदर्थः, नेश्वरः सुखस्वरूपः किन्तु तदाश्रय इति तात्पर्य्यम् । न विद्यते सुखं यस्येति तु नार्थः, बहुव्रीहौ अन्यपदार्थप्रधानत्व-कल्पनागौरवात् 'अस्थूलमनणु' इत्यादिप्रकरणविरोधाच्च । 'आनन्दं ब्रह्मणो विद्वान् न विभेति कदाचने' त्यादौ ब्रह्मण आनन्दस्य ( सुखस्य ) च प्रतिपादितो भेदः स्पष्टतयेति ॥

३७—आत्मविषये साङ्ख्यानां मतं प्रतिपाद्य तन्निरासो विधीयताम् ।

साङ्ख्यमतम्—

द्वावेव हि पदार्थौ प्रकृतिः पुरुषश्च । तत्र प्रकृतिः कर्त्री पुरुषस्तु पद्मपत्रमिव निर्लेपः किन्तु चेतनः, प्रकृतेः परिणामो बुद्धिर्हि 'चेतनाहं करोमी' त्यभिमन्यते । तदभिमानोपपत्तये च चेतनस्य पुरुषस्य कल्पनम्, बुद्धिरेव महत्त्वमन्तःकरणञ्चोच्यते । बुद्धिसंसर्गिणि पुरुषे बुद्धिगतदुःखादिप्रतिबिम्बः पुरुषस्य संसारः । विवेकख्यात्या च बुद्धौ तिरोभूतायां प्रतिबिम्बितदुःखानिवृत्तिः पुरुषस्याऽपवर्गः । इन्द्रियप्रणालिकया बुद्धिपरिणाम एव ज्ञानादिः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाऽग्रहात् ( तत्र ममेदं कर्तव्यमित्यत्र मदंशः पुरुषोपरागः, बुद्धे स्वच्छतया चेतनप्रतिबिम्बाद् अतात्त्विको दर्पणस्येव मुखोपरागः । इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणामविशेषः तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा । कर्तव्यमिति व्यापारावेशः तदुभयाऽऽयत्तो बुद्धिपरिणामेन ज्ञानेन पुरुषस्याऽऽतात्त्विकः सम्बन्धो दर्पणमलिम्नेव मुखस्य—इयमेवोपलब्धिरित्युच्यते ) यथा ज्ञानं कृतिसमानाधिकरणमिति बुद्धिधर्मस्तथा सुख-दुःखेच्छाद्वेष-धर्माऽधर्मादयोऽपि बुद्धेरेव धर्माः कृतिसामानाधिकरण्येन प्रतीतेः । न च बुद्धिरेव चेतनास्त्विति वाच्यम्,—जडप्रकृति—कार्यत्वेन बुद्धेश्चेतनत्वाभावात् इति ।

अत्रोच्यते—'चेतनोऽहं करोमी'ति प्रतीत्या चैतन्यं कृतिश्च सामानाधिकरण्येन प्रतीयते। तद्विरुद्धं 'प्रकृतिः कर्त्री पुरुषश्चेतनः' इति कृतिचैतन्ययोर्वैयधिकरण्यं कथमिव सङ्गतं स्यात्। न च 'चेतनोहं करोमी'ति प्रतीतिश्चैतन्यांशे भ्रमरूपेति वाच्यम्,—कृत्यंशेऽपि तथा प्रसङ्गात्। यदि कर्तृचेतनयोर्भेदः तदा तद्गतसुखदुःखाद्यभावात् बन्धमोक्षव्यवस्था न सम्पद्येत। अर्थात्—बुद्धिसत्त्वे पुरुषस्य संसारो बुद्धेश्च नित्यत्वे पुरुषस्य मोक्षाभावप्रसङ्गः, अनित्यत्वे च तत्पूर्वमसंसारापत्तिः। न च प्रकृतिकार्यत्वात् बुद्धेर्न चैतन्यं कार्यकारणयोरभेदात्, कर्तृत्वं तत्रास्त्येवेति वाच्यम्,—कर्त्तुर्जन्यत्वस्याऽसिद्धेः, अन्यथा बालस्य स्तन्यपाने प्रवृत्तिर्न स्यात्। प्रत्युत वीतरागजन्माऽदर्शनात् कर्त्तुरनादित्वं सिद्ध्यति। अनादिभावस्य च नाशासम्भवात् नित्यत्वम्। तस्मात् नित्यश्चेतन आत्मैव कर्त्ता सुखदुःखाद्याश्रयश्चेति निर्विवादं सिद्धयति (त्यज्यतां वृथा प्रकृत्यादिकल्पनम्।) (न च 'प्रकृतेः क्रियमाणानो'ति गीतावचनविरोध इति वाच्यम्,—प्रकृतेः=अदृष्टस्य, गुणैः=इच्छादिभिः कर्त्ताऽहमेवेत्यस्य तदर्थत्वात्। अर्थात्—अदृष्टेच्छादिभिः सम्भूय कर्तृत्वेऽहमेव कर्तेति मननं मूढत्वम्।

अधिष्ठानं तथा कर्ता करणञ्च पृथग् विधम्।
विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्॥
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥
तत्रैवं सति कर्तारमात्मानं केवलन्तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥

इत्यादि वदता भगवता प्रकटोकृतोऽयमुपरिष्टादाशयः) इति[1]।

३८—कतिविधा बुद्धिः? अनुभूतिश्च कति विधा? कानि तस्याः करणानि?, तत्र प्रत्यलक्षणञ्च व्यावृण। तद्भेदांश्च दर्शय।

बुद्धिर्द्विविधा अनभूतिः स्मृतिश्च। तत्रानुभूतिश्चतुर्विधा-प्रत्यक्षम्'

---

१—परशरीरे कथमात्माऽनुमेयः?, स्वशरीरे चाऽयमात्मा कीदृशप्रत्यक्षगोचरः?

अनुमितिः, उपमितिः, शब्दश्चेति। इयमेव चतुर्विधा प्रमेत्युच्यते। एतासां चतसृणां करणानि चत्वारि—प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दश्चेति। तथा चोक्तं न्यायसूत्रे "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति।

तत्र प्रत्यक्षलक्षण-विवरणम्—

इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्, यथाऽयं घटः अयं पट इत्यादि। न च सर्वस्यापि ज्ञानस्य मनोरूपेन्द्रियजन्यत्वात् अनुमित्यादावतिव्याप्तिः स्यादिति वाच्यम्—इन्द्रियजन्यमित्यादेरिन्द्रियत्वेन रूपेण यत्र ज्ञाने इन्द्रियाणां कारणत्वं तत्प्रत्यक्षमित्यर्थविवक्षणात्। लक्षणमिदमीश्वरप्रत्यक्षे न सङ्घटते, इति नास्ति कश्चिद् दोषो जन्यप्रत्यक्षस्यैवैतल्लक्षणेन लक्षणीयत्वात्। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति सूत्रे तथैवोक्तवात्। (अथवा—ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् इति प्रत्यक्षलक्षणं कर्तव्यम्। लक्षणमिदमीश्वरप्रत्यक्षसाधारणम्। अनुमितौ व्याप्तिज्ञानम्, उपमितौ सादृश्यज्ञानम्, शाब्दबोधे पदज्ञानम्, स्मृतौ अनुभवश्च कारणमिति न कुत्रापि दोषः)।

तद्भेदाः

षड्विधं प्रत्यक्षम्—घ्राणजम्, रासनम्, चाक्षुषम्, स्पार्शनम्, श्रौत्रम्, मानसमिति। तत्र घ्राणजं—गन्ध-गन्धत्व-गन्धाभावादीनाम्। गन्धाश्रयग्रहणे तु गन्धस्य न सामर्थ्यमिति बोध्यम्। रासनम्—रसरसत्वरसाभावादीनाम्। चाक्षुषम्—उद्भूतरूप-तद्वद्द्रव्य-पृथक्त्वसङ्ख्या-विभागादीनाम्। स्पार्शनम्—स्पर्श-स्पर्शत्व-स्पर्शाभावादीनाम्। श्रौत्रम्-शब्द-शब्दत्व-शब्दाभावादीनाम्। मानसम्—आत्मसुखदुःखेच्छाद्वेषादीनाम्।

२९—द्रव्यमात्रप्रत्यक्षे रूपस्य कारणता-विचारणां कुरुत।

द्रव्याणां हि प्रत्यक्षं त्वगिन्द्रियेण चक्षुरिन्द्रियेण वा जायते नान्येन केनापि बहिरिन्द्रियेण। चाक्षुषप्रत्यक्षे तु रूपं कारणं भवत्येव त्वाचप्रत्यक्षमपि रूपवद्द्रव्यस्यैव भवतीति कृत्वा बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपं कारणमिति प्राचां सिद्धान्तः। अत एव ते वायोः प्रत्यक्षं न मन्यन्ते रूपा-

भावात्। किन्तु शब्द-धृति-कम्पादिना तदनुमितिं स्वीकुर्वते। नव्यास्तु-बहिरिन्द्रियजन्य-द्रव्यप्रत्यक्षमात्रे न रूपं कारणम्। किन्तु अन्वयव्यतिरेकात् चाक्षुषप्रत्यक्षे रूपं कारणम्। स्पार्शनप्रत्यक्षे च स्पर्शः कारणम्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्? न किञ्चित् अथवा आत्मावृत्तिशब्दभिन्न-विशेषगुणवत्त्वं कारणमस्ति। ननु रूपस्य कारणत्वे लाघवमिति चेन्न--वायोस्त्वगिन्द्रियेणाऽग्रहणप्रसङ्गात्। इष्टापत्तिरिति चेत्? उद्भूत-स्पर्श एव लाभवत् कारणमस्ति। नच प्रभाया अप्रत्यक्षत्वप्रसङ्गः स्यादिति वाच्यम्, तत्रापीष्टापत्तिरेव किन्नेष्यते। तस्मात् 'प्रभां पश्यामो'-तिवत् 'वायुं स्पृशामो'ति प्रत्ययस्यापि सत्त्वात् वायोरपि प्रत्यक्षं भवत्येवेत्याचक्षते।

**४०—"त्वचो योगो मनसा ज्ञानकारणम्" इति कारिकांशो व्याख्यायताम्। अथवा—ज्ञानसामान्ये किं कारणम्?**

त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणम्। सुषुप्तिकाले त्वचं त्यक्त्वा पुरीततिनाड्यां प्रविशति मनस्तदा न जायते किमपि ज्ञानम्। ततः कल्प्यते त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमिति। ननु—सुषुप्तिकालेऽनुभवसामग्र्यभावात् नाऽनुभवो भवितुमर्हति, अर्थात्—चक्षुरादिना मनःसंयोगाभावात् न चाक्षुषादिप्रत्यक्षम्, ज्ञानादेरभावात् नचापि मानसं प्रत्यक्षम्, एवं व्याप्तिज्ञानाभावात् नाऽनुमितिः, सादृश्यज्ञानाभावान्नोपमितिः, पदज्ञानाभावाच्च न शाब्दबोधः। न चापि स्मरणरूपं ज्ञानं भवितुमर्हति तदुद्बोधकाभावात् इति कथं सुषुप्तिकाले ज्ञानाभावः त्वङ्मनसंयोगस्य ज्ञानसामान्ये कारणतायां प्रमाणं स्यादिति चेन्न—

सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेः तत्सम्बन्धिन आत्मनश्च प्रत्यक्षत्वप्रसङ्गात्। न च तदतीन्द्रियं, प्रमाणाभावात्। तदा निर्विकल्पकमेव ज्ञानं जायते इत्यत्रापि नास्ति प्रमाणम्। तस्मात्सिद्ध्यति त्वङ्मनःसंयोगस्य ज्ञानसामान्ये कारणत्वम्।

(ननु—ज्ञानमात्रे यदि त्वङ्मनःसंयोगस्य कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकालेऽपि स्पार्शनप्रत्यक्षं स्यात्। अस्ति हि तस्मिन् काले विषयत्वक्संयोगः त्वङ्मनःसंयोगश्चेति स्पार्शनप्रत्यक्षसामग्री।

चाक्षुषप्रत्यक्षसामग्र्याः स्पार्शनप्रत्यक्षप्रतिबन्धकत्वे तु स्पार्शन-प्रत्यक्ष-सामग्र्या अपि चाक्षुषप्रत्यक्षप्रतिबन्धकत्वं किन्न स्यात् । परस्परप्रतिबन्धकत्वादेकमपि न स्यात् इति चेन्न—

अनुभवानुरोधात् चाक्षुषादिसामग्र्याः स्पार्शनप्रत्यक्षप्रतिबन्धकत्वं भवति, न तु स्पार्शनप्रत्यक्षसामग्र्याश्चाक्षुषप्रत्यक्षप्रतिबन्धकत्वमिति । वस्तुतस्तु सुषुप्तौ ज्ञानाभावानुरोधेन चर्ममनःसंयोगो ज्ञानसामान्ये कारणं न तु त्वङ्मनःसंयोगः । त्वग् हीन्द्रियं, चर्म तु तदाश्रयः । चाक्षुषादिप्रत्यक्षकाले चर्ममनःसंयोगसत्त्वेऽपि त्वङ्-मनःसंयोगाभावात् न त्वाचप्रत्यक्षत्वापत्तिः )। ( अङ्कान् अवधार्य समयानुसारमेव लिखेलिमम्, इति न विस्मरणीयम् )

४१—किन्नाम निर्विकल्पकं ज्ञानम् ।, किमर्थं च स्वीकार्यम् !, तदतीन्द्रियत्वंच कथम् ? ।

ज्ञानं हि द्विविधं—सविकल्पकं निर्विकल्पकञ्च । तत्र प्रकारतादिसहितं ज्ञानं सविकल्पकम् । प्रकारता-विशेषता-संसर्गता--शून्यं ज्ञानं निर्विकल्पकम् । न च तस्य निर्विषयकत्वापत्तिः—तुरीयैव तत्र विषयतेति स्वीकारात् । तत्सद्भावे प्रमाणञ्चेदम्—'अयं घट इति ज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीपुरुष इति ज्ञानवत्' विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणता, 'नाऽग्रहीत-विशेषणा बुद्धिर्विशिष्ट उपजायते' इति नियमात् । तथा च 'अयं घट' इति विशिष्टज्ञानात्पूर्वं घटघटत्वयोर्विशेष्यता-विशेषणता-संसर्गताऽनवगाहि ज्ञानं जायते तदेव निर्विकल्पकम् ।

निर्विकल्पकस्याऽतीन्द्रियत्वविचारः—

'अयं घट' इति ज्ञानानन्तरं 'घटज्ञानवानह'मिति भवति घटज्ञानस्य ज्ञानम् । तदेवाऽनुव्यवसाय इत्युच्यते, ज्ञानविषयकं ज्ञानमिति वा, निर्विकल्पकस्य तु न भवत्यनुव्यवसायस्तस्मादतीन्द्रियं हि तत् । अयम्भावः—'घटमहं जानामी'त्यत्राऽऽत्मनि ज्ञानं प्रकारः, ज्ञाने घटः, घटे घटत्वम् ( प्रकारो=विशेषणम् ) । विशेषणे यद् विशेषणं तद् विशेषणतावच्छेदकमिति न्यायेन ज्ञानविशेषणीभूते घटे यद् विशेषणं घटत्वं तद् विशेषणतावच्छेदकम् । विशेषणता-प्रकारकज्ञानं हि विशिष्ट-

वैशिष्ट्यज्ञाने ( अनुव्यवसाये ) भवति कारणम् । निर्विकल्पके च ज्ञाने न भवति घटत्वादीनां प्रकारतया भानम् इति विशेषणतावच्छेदकप्रकारकज्ञानाभावात् न भवति निर्विकल्पकस्य विशिष्टवैशिष्ट्यज्ञानम् = अनुव्यवसाय इति सिद्धं तस्याऽतीन्द्रियत्वम् ।

४२—षड्विध—प्रत्यक्षे महत्त्वस्य हेतुत्वं विव्रियताम् ।

'महत्त्वं षड्विधे हेतुः'—तच्च तत्तत्सम्बन्धभेदादुपपद्यते । तथाहि—'द्रव्यप्रत्यक्षे महत्त्वं' समवायसम्बन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे महत्त्वं स्वाश्रयसमवायसम्बन्धेन कारणम् । तत्र स्वम् = महत्त्वं स्वाश्रयः = द्रव्यम् तत्र समवायो गुणकर्मसामान्यानामिति । द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे च महत्त्वम् स्वाश्रयसमवेतसमवायसम्बन्धेन कारणम्, तत्र स्वम् = महत्त्वम् तत्राश्रयः = द्रव्यम् तत्र समवेता गुणकर्मादयः, तत्र समवायो गुणत्वकर्मत्वादीनामिति । एवम् अन्यत्रापि तत्तत्सम्बन्धेन महत्त्वस्य कारणत्वं कल्पनीयम् ।

४३—किन्नामेन्द्रियत्वमिति प्रतिपाद्यताम् ।

इन्द्रियत्वं न जातिः पृथिवीत्वादिना साङ्कर्यात् । ( पृथिवीत्वाभाववति चक्षुरादौ इन्द्रियत्वमस्ति, इन्द्रियत्वाभाववति च घटादौ पृथिवीत्वमस्ति द्वयोः समावेशश्च घ्राणेन्द्रिये—इत्यस्ति सङ्करः ) किन्तु शब्देतरोद्भूतविशेषणगुणाऽनाश्रयत्वे सति ज्ञानकारण-मनःसंयोगाश्रयत्वम् इन्द्रियत्वम् ( इन्द्रियलक्षणम् ) । आत्मादावतिव्याप्तिवारणाय सत्यन्तम्, तत्रापि—उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्वात् शब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुक्तमुद्भूतेति । शब्देतरोद्भूतगुणः संयोगादिः चक्षुरादावप्यस्ति, अत उक्तं विशेषेति । कालादावतिव्याप्तिवारणाय विशेष्यदलम् । कालगतरूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रये कालादौ अतिव्याप्तिवारणाय मनः पदम् । पुनस्तत्रैवाऽतिव्याप्तिवारणाय ज्ञानकारणमिति ।

४४—षड्विधसन्निकर्षः सोदाहरणं निरूपयत ।

प्रत्यक्षे इन्द्रियं करणम् । असाधारणं कारणं करणम् । असाधारणत्वञ्च व्यापारत्वम्; स च व्यापारोऽत्र विषयेन्द्रियसम्बन्धरूपः, स एव

सन्निकर्ष इत्युच्यते। षडविधश्च सः। तथा हि-इन्द्रियसंयोगः, इन्द्रिसंयुक्त-समवायः, इन्द्रियसंयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावश्चेति। अथ तदुदाहरणविशेषाः प्रदर्श्यन्ते—द्रव्यचाक्षुषे प्रत्यक्षे चक्षुःसंयोगः सन्निकर्षः, चक्षुषो द्रव्यस्य च घटादेः परस्परं संयोगात्। द्रव्यसमवेतानां गुणकर्मादीनां चाक्षुषप्रत्यक्षे चक्षुःसंयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटादौ गुणकर्मादीनां समवायात्। द्रव्यसमवेत-समवेतानां गुणत्वकर्मत्वादीनां चाक्षुषप्रत्यक्षे चक्षुःसंयुक्तसमवेत-समवायः सन्निकर्षः। चक्षुःसंयुक्ते घटादौ समवेता गुणकर्मादयस्तत्र गुणत्वकर्मत्वादीनां समवायात्। एवम्—द्रव्यस्पार्शनादिप्रत्यक्षे घ्राण-जादिप्रत्यक्षे च सर्वत्र सन्निकर्षाः कल्प्यन्ताम्। शब्दप्रत्यक्षे च श्रोत्रा-वच्छिन्नसमवायः सन्निकर्षः, श्रोत्रावच्छिन्न आकाशे शब्दस्य समवायात्। शब्दसमवेतानां शब्दत्वादीनां श्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेत-समवायः सन्निकर्षः। श्रोत्रावच्छिन्ने आकाशे समवेतः शब्दस्तत्र शब्दत्वा-दीनां समवायात्। अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसम्बद्ध-विशेषणता सन्निकर्षः, स चैवं पर्यवस्यति—भूतलनिष्ठघटाभावस्य चाक्षुष-प्रत्यक्षे चक्षुःसंयुक्तविशेषणता सन्निकर्षः। सङ्ख्यादौ रूपाद्यभावप्रत्यक्षे संयुक्त-समवेत-विशेषणता। सङ्ख्यात्वादौ रूपाद्यभावप्रत्यक्षे संयुक्त-समवेत-समवेत-विशेषणतासन्निकर्षः। शब्दाभावप्रत्यक्षे श्रोत्रावच्छिन्न-विशेषणता। कादौ खत्वाभावप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतविशेषणता। कत्वावच्छिन्नाभावनिष्ठ-गत्वाभावादिप्रत्यक्षे श्रोत्रावच्छिन्नविशेषण-विशेषणता। घटाभावादौ पटाभावप्रत्यक्षे संयुक्तविशेषणविशेषणता। इत्यादिरूपेण यद्यपि विशेषणता नानाविधा तथापि विशेषणतात्वरूपेणै-कैव सा गण्यते। अन्यथा— षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येत।

(४५)—पृथिवीपरमाणौ पृथिवीत्वस्य, पृथवीपरमाणुनीले नीलत्वस्य, वायौ वायुस्पर्शादौ च सत्तायाश्चाक्षुषं प्रत्यक्षं कुतो न जायते?। किञ्च पुरतश्चक्षुः-संयोगे पृष्ठतश्चालोकसंयोगे घटस्य चाक्षुषप्रत्यक्षं कुतो न सम्पद्यते?।

ननु—पृथिवीपरमाणौ पृथिवीत्वस्य पृथिवीपरमाणुनीले नीलत्वस्य च चाक्षुषं प्रत्यक्षं स्यात्। चक्षुःसंयुक्तसमवायस्य चक्षुःसंयुक्तसमवेत-समवा-

यस्य च ( सन्निकर्षस्य ) सत्त्वात् । उद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च तत्र सत्त्वात् । तथाहि पृथिवीपरमाणुनिष्ठपृथिवीत्वे घटादिकमादाय महत्त्वसम्बन्धोऽस्ति । एवं नीलत्वजातिरेकैव घटनीले परमाणुनीले च वर्तते । तथा च महत्त्वसम्बन्धो घटनीलमादाय वर्तते । उद्भूतरूपसम्बन्ध-स्तूभयमादायैवाऽस्ति । एवम्--वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुष-प्रत्यक्षं स्यात् पूर्ववत् सन्निकर्षस्य तत्र सत्त्वात् । घटादिकमादाय उद्भूत-रूपसम्बन्धोऽपि वर्तते तत्र महत्त्वसम्बन्धस्तूभयमादायैवाऽस्ति इति चेन्न—

द्रव्यसमवेतचाक्षुषप्रत्यक्षे द्रव्यसमवेत--समवेत-चाक्षुषप्रत्यक्षे वा न केवलं चक्षुःसंयुक्तसमवायः चक्षुःसंयुक्त समवेतसमवायो वा सन्निकर्षः ( कारणम् ) किन्तूद्भूतरूपावच्छिन्न—महत्त्वावच्छिन्न-संयुक्तसमवायः, उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्न-चक्षुःसंयुक्त-समवेतसमवायो वा कारणं वाच्यम् । तथा च पृथिवीपरमाणुनिष्ठ-पृथिवीत्वस्य, पृथिवी परमाणुनील-निष्ठनीलत्वस्य च न चाक्षुषप्रत्यक्षत्वापत्तिः । परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं न वाय्वादौ सत्तायाश्चाक्षुषप्रत्यक्षत्वा-पत्तिः । तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् ।

अथ च यत्र घटस्य मध्यावच्छेदेन आलोकसंयोगः पृष्ठावच्छेदेन वा, चक्षुःसंयोगस्तु बाह्यावच्छेदेनाऽग्रावच्छेदेन वाऽस्ति तत्रापि चक्षुःसंयोग-रूपस्य सन्निकर्षस्य सत्त्वात् कुतो न भवति घटप्रत्यक्षमिति शङ्कानि-वारणाय आलोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । तथा च तत्र चक्षुःसंयोगस्याऽऽलोक-संयोगावच्छिन्नत्वाभावान्न दोषः ।

४६—अभावप्रत्यक्षे योग्याऽनुपलब्धेः कारणत्वं प्रतिपादयत ।

अभावप्रत्यक्षे हि योग्याऽनुपलब्धिः कारणम् । भूतले घटज्ञाने सति घटाभावज्ञानं न सम्भवति । तेनाऽभावप्रत्यक्षे प्रतियोगि-प्रत्यक्षाभावः कारणम् । तत्र योग्यताप्यपेक्षिता । सा च प्रतियोगि-सत्त्वप्रसञ्जनसञ्जित-प्रतियोगिकत्वरूपा । तदर्थश्चायम्– प्रतियोगिनः = घटादेः सत्त्वप्रस-क्त्या प्रसञ्जितः उपलम्भरूपः प्रतियोगी यस्य, तस्य भावस्तत्त्वमिति । तद् यथा—यत्रालोकसंयोगादिकं वर्तते तत्र "यद्यत्र घटः स्यात्तर्हि चक्षुषोपलभ्येत" इत्यापादयितुं शक्यते । तेन तत्र भवति घटाभावादेः

चाक्षुषं प्रत्यक्षम् । अन्धकारे तु नैवमापादयितुं शक्यते, तेन घटाभावादेरन्धकारं न चाक्षुषं प्रत्यक्षम् । स्पार्शनप्रत्यक्षं तु स्यादेव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्याऽऽपादयितुं शक्यत्वात् । गुरुत्वादिकं यत्प्रत्यक्षायोग्यं तदभावोऽपि न प्रत्यक्षः । तत्र गुरुत्वादिप्रत्यक्षस्य आपादयितुमशक्यत्वात् । एवम्—संसर्गाभावप्रत्यक्षे सर्वत्रापि प्रतियोगिनो योग्यताऽपेक्ष्यते । अन्योन्याभाव-प्रत्यक्षेऽधिकरण-योग्यताऽपेक्षिता न प्रतियोगियोग्यता । अत एव स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यते एव ।

४७—कतिविधोऽलौकिकः सन्निकर्षः, इति सोदाहरणं निरूपयत ।

द्विविधं प्रत्यक्षं लौकिकमलौकिकञ्च । लौकिकप्रत्यक्षे षड्विधः सन्निकर्षः इन्द्रियसंयोगादिरूपः पूर्वमुपवर्णितः । अलौकिकप्रत्यक्षे च त्रिविधः सन्निकर्षः—सामान्यलक्षणः, ज्ञानलक्षणः, योगजश्चेति—

त्रयाणामपि स्वरूपोदाहरणानि

तत्र सामान्यलक्षणस्तावत् सामान्यं लक्षणम्=स्वरूपं यस्य स सामान्यलक्षणः सन्निकर्षः सामान्यस्वरूप इत्यर्थः । सामान्यञ्चेन्द्रियसम्बद्धज्ञाने प्रकारीभूतं बोध्यम् । यथा—इन्द्रियसम्बद्धो धूमादिः तद्विशेष्यकं ज्ञानञ्च 'अयं धूम' इति, तत्र ज्ञाने च प्रकारीभूतं धूमत्वम् । तत्र धूमत्वेन सामान्यलक्षणसन्निकर्षेण 'धूमाः' इत्येवं रूपं सकलधूमविषयकमलौकिकप्रत्यक्षं जायते । इदञ्च बहिरिन्द्रियस्थले सामान्यलक्षणस्वरूपम्, मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं सामान्यलक्षणसन्निकर्षः ।

परन्तु समानानां भावः सामान्यम् । तच्च क्वचिन्नित्यं धूमत्वादिः, क्वचिच्चाऽनित्यं घटादिः । 'घटवदिदं भूतलम्' अत्र घटः सामान्यम् । तेनैव सामान्यलक्षणसन्निकर्षेण सर्वेषां घटवतां भूतलादीनामलौकिकप्रत्यक्षं जायते इति वाच्यं स्यात् । किन्तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातम्, तत्र सामान्यलक्षणसन्निकर्षेण सर्वेषां घटवतां ज्ञानं न स्यात्, घटरूपस्य सामान्यस्य तदानीमभावात् । किञ्चेन्द्रियसम्बद्धविशेष्यकम् 'अयं घटः' इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृश-ज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्

सकलघटविषयकमलौकिकं प्रत्यक्षं कुतो न जायते। ततश्च सामान्य-विषयकं ज्ञानं सामान्यलक्षणसन्निकर्षः, न तु सामान्यस्वरूपमिति। अर्थात्—सामान्यलक्षणशब्दे लक्षणपदस्य विषयोऽर्थो न तु स्वरूपमिति। ज्ञानलक्षणसन्निकर्षश्च ज्ञानरूपो यथा 'सुरभिचन्दनम्' इत्यत्र सौरभभानं ज्ञानलक्षणसन्निकर्षेणैव। योगजश्च योगाभ्यासजनितो धर्मविशेषः श्रुति-पुराणादिप्रतिपाद्यः। तेन चातीतानागत-विप्रकृष्टादिज्ञानं योगिनो भवति। स च द्विविधः—युक्तयुञ्जानभेदात् योगिद्वैविध्यात् तद्धर्मस्यापि द्वैविध्यमिदमुक्तम्। योगिनश्चेदं द्वैविध्यं यन्मूलं तदुक्तं मूले—'युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः' इति।

४८—सामान्यलक्षण-ज्ञानलक्षणयोः को भेदः ? तदन्यतराऽस्वीकारे का हानिरिति स्पष्टं प्रतिपादयत।

ननु—सामान्यलक्षणसन्निकर्षोऽन्ततः सामान्य-विषयकज्ञानरूप-मेव पर्यवस्यति। ज्ञानलक्षण-सन्निकर्षोऽपि ज्ञानलक्षणं स्वरूपं यस्येति विग्रहेण ज्ञानरूपमेवेति सिद्धान्तः तथा चोभयोर्ज्ञानस्वरूपत्वेन नास्ति कोऽपि भेदः इति चेन्न—

सामान्यलक्षणसन्निकर्षो हि ज्ञानरूपमपि सद् यस्य सामान्यस्य ज्ञानं तत्सामान्याश्रयस्य धूमादेः ज्ञानं जनयति। यथा चोक्तं मूले—'आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते'। सामान्यलक्षणसन्निकर्षस्तु यद्विषयकं ज्ञानं तस्यैव ज्ञानं जनयति न तु तदाश्रयस्य। यथा चोक्तम्—

'विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः' इति।

तयोरुभयोः सार्थक्यम्—

प्रत्यक्षे सन्निकर्षं विना न भवति कस्यापि भानम्। तथा च सामान्य-लक्षणसन्निकर्षं विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां ज्ञानं न स्यात्। तदर्थं सामान्यलक्षणः स्वीक्रियते। सकल-धूमवह्निभाना-भावे तु प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् अन्य धूमस्य चानुपस्थित-त्वात्। धूमो वह्निव्यापी न वेति संशयानुपपत्तिरेव महती क्षतिः। सामान्यलक्षणस्वीकारे तु तेन सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीय-धूमे वह्निव्याप्यत्वसन्देहः सम्भवति। सामान्यलक्षणसन्निकर्षेण प्रमेय-

त्वेन सकलप्रमेयज्ञाने जातेऽपि सार्वज्ञ्यन्तु न शङ्कनीयम्। विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात्।

एवं ज्ञानलक्षणसन्निकर्षस्याऽस्वीकारे 'सुरभिचन्दन'मिति ज्ञाने सौरभस्य भानं कथं स्यात्। सामान्यलक्षणेन कथञ्चित् सौरभभाने जातेऽपि 'सौरभत्वस्य' भानं ज्ञानलक्षणसन्निकर्षेणैव। किञ्च यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणसन्निकर्षेणैव। इत्युभयोरपि स्वीकरणं न्याय्यम्, नान्यतरस्वीकारेण गतार्थतेति शम्।

इति प्रत्यक्षखण्डः।

# अथ अनुमानखण्डः

४९—अनुमितिं निरूपयत, तत्र किं कारणं ? कश्च व्यापारः ? ज्ञानमात्रं लिङ्गं चानुमितौ कुतो न करणम् ? इति स्पष्टं सर्वमिदं प्रतिपाद्यताम्।

'व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्।
अनुमायाम्..............'' ॥

अनुमितौ परामर्शो व्याप्तिज्ञानं च कारणम्। व्याप्तिज्ञानं कारणं परामर्शश्च व्यापारः। तथा हि—भूयो दर्शनेन 'यत्र धूमस्तत्र वह्नि' रिति गृहीत-साहचर्य-नियमस्य पर्वतगते वह्नौ सन्दिहानस्य तत्रैव पर्वतेऽविच्छिन्नमूलां धूमलेखां पश्यतः "धूमो वह्निव्याप्यः" इति व्याप्तिं च स्मरतः पुरुषस्य "वह्निव्याप्य-धूमवानयं पर्वत" इति परामर्शज्ञानं जायते। ततश्च "पर्वतो वह्निमान्" इत्यनुमितिरुत्पद्यते। सेयं स्वार्थानुमितिः। यत्र तु स्वयं धूमादग्निमनुमाय परं प्रतिबोधयितुं पञ्चावयववाक्यं प्रयुज्यते परार्थानुमितिर्हि सा, यथा—(१) पर्वतो वह्निमान् (२) धूमवत्त्वात् (३) यो यो धूमवान् स स वह्निमान् यथा महानसम् (४) तथा चायम् (५) तस्मात्तथा इति पञ्चावयववाक्यप्रयोगेण परोऽप्यग्निं प्रतिपद्यते।

अत्र केचित् (प्राचीनाः) व्याप्यत्वेन ज्ञायमानं लिङ्गमेव करणं वदन्ति, तन्न, यतः—

"अनागतादि लिंगेन न स्यादनुमितिस्तदा"।

अर्थात् यदि व्याप्यत्वेन ज्ञायमानं लिङ्गम् अनुमितौ करणं स्यात्तदाऽनागतेन विनष्टेन वा (अनुमितिकालेऽविद्यमानेनेत्यर्थः) लिङ्गेन अनुमितिर्न स्यात्, नहि यद् यत्र हेतुस्तदभावेऽपि कार्यं तत्रोपपद्यते। भवति च भविष्यता भूतेनापि च लिंगेन अनुमितिस्तद्यथा—'इयं यज्ञशाला वह्निमती भविष्यति भाविधूमात्" "इयं यज्ञशाला वह्निमत्यासीत् भूतधूमात्" इति। तस्माद् व्याप्तिज्ञानं = व्याप्तिविशिष्टलिङ्गज्ञानमेवाऽनुमितौ करणं, न तु व्याप्यत्वेन ज्ञायमानं लिङ्गम्।

५०—कोऽयं परामर्शो नाम ?, किञ्च तत्स्वरूपं ?, क्व चासौ अनुमितेः कारणमिति प्रतिपाद्यताम्। (तत्र विशेषश्च)।

"व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते व्याप्यस्य = व्याप्तिविशिष्टस्य पक्षवृत्तित्वधीः पर्वतादिवृत्तित्वज्ञानं परामर्श इत्यर्थः। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्श इत्यन्यत्र। उभयोर्नार्थान्तरम्। व्याप्यः पक्षे इति ज्ञानम्, पक्षो व्याप्यवानिति ज्ञानं वा परामर्शः यथा पर्वतो वह्निमानित्यनुमितौ "वह्निव्याप्यधूमवान् पर्वतः" इति ज्ञानं परामर्शः। व्याप्ति-विशिष्ट-वैशिष्ट्यावगाहि ज्ञानं हि सः तेनैव रूपेणानुमितौ कारणं च।

तत्र विशेषः।

(नच 'धूमवान् पर्वतः' 'धूमो वह्निव्याप्यः' इति ज्ञानद्वयादेवानुमिति-दर्शनात् किमति गौरवग्रस्तं व्याप्तिविशिष्ट-वैशिष्ट्यावगाहि ज्ञानं सर्वत्रानुमितौ कारणं कल्प्येत। व्याप्यतावच्छेदक-प्रकारक-पक्षधर्मताज्ञानत्वेनैव परामर्शस्य कारणत्वं किन्न मन्येत इति वाच्यम्, व्याप्यतावच्छेदकाऽज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेः, लाघवाच्च व्याप्तिप्रकारक–पक्षधर्मता-ज्ञानत्वेनैव हेतुत्वस्यौचित्यात्। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमुच्यते, तदा कार्य-कारणभावद्वयम्। वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिश्च स्यात्। इत्थं च यत्र ज्ञानद्वयं तत्रापि निरुक्तदोषपरिहाराय विशिष्ट-ज्ञानं

कल्पनीयमेवेति व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनैव परामर्शस्यानुमितिकारणत्वं श्रेयः )

५१—पूर्वं-व्याप्तिलक्षणं विलिख्य संगमय्य च पर्यालोच्यताम् । (विशेषेण) ।

"व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः" साध्यवदन्यस्मिन् हेतोरसम्बन्धो व्याप्तिरित्यन्वयः । साध्यवत्प्रतियोगिक-भेदाधिकरण-निरूपित-वृत्तित्वाभावो व्याप्तिरिति व्याप्तिलक्षणम् । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान् पर्वतमहानसादिः साध्यप्रतियोगिकभेदश्च "साध्यवान्न" इति । तदधिकरणं जलह्रदादिस्तन्निरूपित-वृत्तित्वं घटादौ वृत्तित्वाभावो धूमादाविति लक्षणसमन्वयः ।

अत्रायं विशेषः

( अत्र समवायसम्बन्धेन वह्निमान् वह्नेरवयवास्तदन्यो महानसादिस्तत्र वृत्तित्वं धूमस्येति ( नास्ति वृत्तित्वाभावः ) अव्याप्तिः स्यादिति तद् वारणाय येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः । अर्थात् साध्यवद्भेदस्य या प्रतियोगिता सा साध्यतावच्छेदकसम्बन्धावच्छिन्ना स्यादिति ।

किञ्च तत्रैव प्रतियोगितायां साध्यवत्त्वावच्छिन्नत्वमपि विशेषणीयम् । तेन यत्किञ्चिद् वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः ।

अथ भेदाधिकरणे वृत्तिताऽपि हेतुतावच्छेदक-सम्बन्धावच्छिन्नैव बोध्या, अन्यथा साध्यवदन्यस्मिन् ( भेदाधिकरणे ) धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वादव्याप्तिः स्यात् ।

पुनश्च साध्यवद्भेदाधिकरणनिरूपित-वृत्तित्वाभावोऽपि साध्यवदन्य-वृत्तित्वावच्छिन्नप्रतियोगिताकाऽभावो बोध्यस्तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः ।

किन्वात्र साध्यवद्भेदाधिकरणे हेतोः हेतुतावच्छेदकरूपेणैवावृत्तित्वं विवक्षितम्, तेन इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत्त्वात्' इत्यत्र विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यवद्भेदाधिकरणे गुणादौ अवृत्तित्वाऽभावेऽपि न दोषः ।

तथा च साध्यतावच्छेदक-सम्बन्धावछिन्नप्रतियोगिताक-भेदाधिकरणत्वावच्छिन्ननिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाऽभावो व्याप्तिरिति ( पूर्व ) व्याप्तिलक्षणं पर्यवसन्नम् । )

५२—पूर्वव्याप्तिलक्षणे दोषमुद्भाव्य उत्तरव्याप्तिं निरूपयत । अथवा उत्तर—व्याप्तिलक्षणकारिका व्याख्यायताम् । तत्र विशेषविचारश्चोपक्षिप्यताम् ।

निरुक्त—व्याप्तिलक्षणस्यापि ज्ञेयत्वादौ साध्ये ( घटो ज्ञेयोऽभिधेयत्वादित्यादौ ) साध्यवदन्यस्याऽप्रसिद्धत्वादव्याप्तिः स्यादिति निर्दुष्टं सर्वत्र संगच्छमानं व्याप्तिलक्षणमाह—

"अथवा हेतुमन्निष्ठविरहाऽप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" ॥

हेतुमति निष्ठा वृत्तिर्यस्य स हेतुमन्निष्ठो विरहोऽभावः, हेत्वधिकरणवृत्तिर्योऽभाव इत्यर्थः, तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिः । यथा 'पर्वतो वह्निमान्' इत्यत्र हेतुर्धूमः तदधिकरणं महानस–पर्वतादिः, तद्वृत्तिरभावो घटाऽभावादिः, तत्प्रतियोगी घटादिः, अप्रतियोगी वह्निः ( साध्यम् ) तेन साध्येन वह्निना हेतोर्धूमस्य सामानाधिकरण्यम् ( पर्वतमहानसादौ ) सेयं व्याप्तिरित्युच्यते हेत्वधिकरणवृत्त्यभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं निष्पद्यते,

( अत्र विशेषविचारः )

ननु, प्रसिद्धोदाहरणे वह्निमान् धूमादित्यत्रैव हेत्वधिकरणे पर्वतादौ महानसीयवह्नेरभावः, महानसे चत्वरीयवह्नेरभावश्चत्वरे गोष्ठीयवह्नेरभाव इत्यादिरूपेण वह्निरूपं साध्यं तदभावाऽप्रतियोगी नास्ति किन्तु प्रतियोग्येवेति लक्षणस्याव्याप्तिः स्यात् । एवं "घटो गुणो द्रव्यत्वादि" त्यत्रापि रक्तघटे पीतगुणस्याभावः पीतघटे श्वेतगुणस्याभावोऽस्ति, गुणरूपं साध्यं तदभावस्य प्रतियोग्येव, अप्रतियोगी नास्ति इति लक्षणस्याव्याप्तिदोषः इति चेन्न—

हेत्वधिकरण-वृत्त्यभावीय-प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्न-साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणात् ।

नच रूपत्वव्याप्यजातिमत्त्वात् पृथिवीत्वात् इत्यादौ रूपत्वव्याप्यजातयः साध्यतावच्छेदिकास्तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीति पुनरव्याप्तिः स्यादिति वाच्यम्। तत्र परम्परया रूपत्व-व्याप्यजातित्वस्यैव साध्यता-वच्छेदकत्वात्।

अत्र हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाकरणं वोध्यम्, अन्यथा 'द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादि" त्यत्र द्रव्यत्वस्य शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वादव्याप्तिः स्यात्।

एवं हेत्वधिकरणं हेतुतावच्छेदकसम्बन्धेन स्यादिति ज्ञेयम्। तेन समवायेन धूमाधिकरण—तदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः। तथाचेदमत्र लक्षणस्वरूपं पर्यवसन्नम्।

हेतुतावच्छेदकसम्बन्धेन यत् हेतुतावच्छेदकविशिष्टहेत्वधिकरणं तदवृत्त्यभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति। ( बहुविस्तरादत्रैव समाप्यतेऽयं विशेषविचारः )।

**५१—अथ का पक्षता नाम तल्लक्षणं लक्ष्ये संगमनं च प्रदर्श्यताम्। अथवा "सिषाधयिषया शून्या..." इत्यादि कारिका व्याख्यायताम्।**

"सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्"।

सिषाधयिषा–साधयितुमिच्छा तया शून्या=तदभावविशिष्टा या सिद्धिः साध्यनिश्चयः, न विद्यते=तदभाव इत्यर्थः, सा पक्षता। तदाश्रयः पक्षः, हेतोस्तद् वृत्तिज्ञानादनुमितिर्भवेत् ( व्याप्यस्य पक्षवृत्तित्वधीः परामर्शस्ततोऽनुमितिरित्युक्तमेव )।

"सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता" इति पक्षता-लक्षणम्।

सिषाधयिषामात्रं न पक्षता, विनापि तां घनगर्जितेन मेघानुमानात्। अत एव साध्यसन्देहोऽपि न पक्षता, विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव। अत एव सिषाधयिषाविरह-विशिष्टत्वं सिद्धौ विशेषणम्।

तथा च यत्र सिद्धिर्नास्ति यत्र सिषाधयिषाया सत्यामसत्यामपि

पक्षताऽस्ति। यत्र सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामप्यस्ति पक्षता। यत्र तु सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सिषाधयिषाविरह–विशिष्टायाः सिद्धेरभावस्याऽभावादिति।

५४—किं नाम हेत्वाभासत्वम्?। हेत्वाभासभेदाश्च के?। प्रत्येकं लक्षणमुदाहरणं च प्रदर्श्यताम्।

यद् विषयकत्वेन ज्ञानस्यानुऽमितिप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वम्, इति हेत्वाभासलक्षणम्। हेतोराभासा हेत्वाभासा हेतुनिष्ठा दोषास्तेषां भावो हेत्वाभासत्वम् अथवा हेतुवदाभासन्ते इति हेत्वाभासा दुष्टा हेतव इत्यर्थः तत्त्वं हेत्वाभासत्वम्। व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्ते (व्यभिचारादयो) हेत्वाभासाः।

हेत्वाभासाः पञ्चविधाः—

(१) अनैकान्तः (सव्यभिचारः) (२) विरुद्धः। (३) असिद्धः। (४) सत्प्रतिपक्षः (५) बाधितश्चेति।

१—प्रथमोऽनैकान्तस्त्रिधा—

(१) साधारणः। (२) असाधारणः। (३) अनुपसंहारी च।

तत्र

(१) सपक्ष विपक्षवृत्तिः साधारणः, विरुद्धावारणाय सपक्षवृत्तित्वमुक्तम्। वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्। तत एव चान्यत्र "साध्याभाववद्वृत्तिः साधारणः' इत्युक्तम्। यथा 'पर्वतो वन्हिमान् प्रमेयत्वात्' इति। प्रमेयत्वस्य वह्न्यभाववति ह्रदेऽपि विद्यमानत्वात्साधारणत्वम्।

(२) सर्वसप-क्षविपक्ष व्यावृत्तः पक्षमात्रवृत्तिरसाधारणः यथा "शब्दो नित्यः शब्दत्वात्" इति। अत्र शब्दत्वं हेतुः सर्वेभ्यो नित्येभ्यः (सपक्षेभ्यः) अनित्येभ्यश्च (विपक्षेभ्यो घटादिभ्यः) व्यावृत्तः शब्दमात्रवृत्तिरिति असाधारणत्वं तस्य।

(३) केवलान्वयिपक्षकोऽन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वात् इति, अत्र सर्वस्यैव पक्षत्वात् अन्वयव्यतिरेकदृष्टान्ताभावादनुपसंहारीत्वम्।

२—द्वितीयश्च विरुद्धो नाम

तल्लक्षणं च "यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः" साध्याभावव्याप्तो हेतुरित्यर्थः। यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि साध्याभावेन अनित्यत्वेन व्याप्तम्, साध्यवति नित्ये च नास्त्येवेति विरुद्धत्वं तस्य।

३—तृतीयोऽसिद्धस्त्रिधा—

(१) आश्रयासिद्धः। (२) स्वरूपासिद्धः। (३) व्याप्यत्वासिद्धश्च।

तत्र

(१) पक्षासिद्ध आश्रयासिद्धः। यथा "गगनारविन्दं सुरभि, अरविन्दत्वात्"। अत्र गगनारविन्दम् आश्रयः (पक्षः) स च नास्त्येवेति आश्रयाऽसिद्धत्वं हेतोः!

(२) स्वरूपेणैवासिद्धः स्वरूपासिद्धः। यथा "शब्दो गुणश्चाक्षुषत्वात्, रूपवत्" अत्र चाक्षुषत्वं शब्दे नास्ति, तस्य श्रावणत्वादिति स्वरूपासिद्धिस्तस्य।

(३) सोपाधिको हेतुर्व्याप्यत्वासिद्धः। यथा—"धूमवान् वह्नेः" इत्यत्र हेतुभूतो वह्निः सोपाधिकत्वात् व्याप्यत्वाऽसिद्धः (अत्र आर्द्रेन्धनसंयोग उपाधिः)।

४—चतुर्थः सत्प्रतिपक्षः—

साध्याभाव—साधकं हेत्वन्तरं यस्य विद्यते स सत्प्रतिपक्षः। यथा—"शब्दो नित्यः श्रावणत्वात्" "शब्दोऽनित्यः कार्यत्वात् घटवत्" इत्यत्र कार्यत्वं (हेतुः) साध्याभावसाधकमिति श्रावणत्वादिति हेतुः सत्प्रतिपक्षः।

५—पञ्चमो बाधितः—

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। 'वह्निरनुष्णो द्रव्यत्वात्, इत्यत्र साध्याभाव उष्णत्वं प्रत्यक्षसिद्धमिति बाधितत्वम्।

इत्यनुमानखण्डः सम्पूर्णः।

# उपमितिः

५५—उपमितिप्रकारः प्रदर्श्यताम् । तन्निरूपणं वा पूर्णतया विधीयताम् ।

संज्ञा-संज्ञिसम्बन्धज्ञानमुपमितिः । यथा गोसदृशो गवय इति कस्माच्चिदारण्यक-पुरुषाच्छ्रुत्वा वनं गतो ग्रामीणस्तत्र गवयं पश्यति । अथ पूर्वश्रुतातिदेशवाक्यार्थं स्मरति । तदनन्तरं च तस्य गवयो गवयपदवाच्यः इति ज्ञानं यज्जायते तदुपमितिः । तथा चोपमितौ सादृश्यज्ञानं करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः । गवयादिपदानां शक्तिज्ञानं फलं तदेवानुमितिः । यथा चोक्तं पूर्वमेव संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिरिति ।

# अथ शब्दखण्डः

५६—शाब्दीं प्रमां निरूपयत । अथवा शाब्दबोधप्रकारं दर्शयत । अथवा "पदज्ञानन्तु···" इत्यादिकारिकां व्याख्यात ।

अनुभूतिः (प्रमा) हि प्रत्यक्षाऽनुमित्युपमितिशाब्दभेदाच्चतुर्विधा । तस्याश्चतुर्थी विधा शाब्दी प्रमा । सैव शाब्दी अनुभूतिः, शाब्द-बोधश्चेत्युच्यते । पदज्ञानकरणकं ज्ञानं शाब्दबोधः (शाब्दी प्रमा)। तत्रेदं तस्या विवरणम्—

"पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥"

शाब्दबोधे हि पदज्ञानं करणम्, पदार्थज्ञानम्=पदजन्यपदार्थस्मरणं व्यापारः । (पदजन्यपदार्थस्मरणं हि—वृत्त्या पदजन्यपदार्थस्मरणं बोध्यम्, अन्यथा समवायसम्बन्धेन घटादिपदाद् आकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तिः स्यात्) वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्धः । पदजन्य पदार्थोपस्थितावेव शक्तिज्ञानस्योपयोगः, अत एवोक्तं मूले "शक्तिधीः सहकारिणीति" । ततश्चैवं सत्यपि पदज्ञाने शक्तिग्रहाभावे न भवति पदार्थ-स्मरणम् । पदज्ञानस्य च "एकसम्बन्धि ज्ञानमपरसम्बन्धि स्मारक" मिति न्यायेन अर्थस्मारकत्वं बोध्यम् । पदेन सह

पदार्थस्य सम्बन्ध एव शक्तिः, स च "अस्माच्छब्दादयमर्थो बोद्धव्यः" इतीश्वरेच्छारूपः। "एकादशेऽहनि पिता नाम कुर्यात्" इतीदृशविधिरूपेश्वरेच्छायाः सत्त्वाद् आधुनिके नाम्नि चापि-भवत्येव शक्तिः। नव्यास्तु—ईश्वरेच्छांशवितं न मन्यन्ते किन्तु इच्छामेव शक्तिं स्वीकुर्वते। एवं शक्ति-द्वारा पदजन्यपदार्थस्मरणं शाब्दबोधे व्यापारः। पदज्ञानञ्च तद्द्वारा शाब्दबोधं जनयतीति संक्षेपः। केश्चिच्च ज्ञायमानं पदं शाब्दबोधे करणमुच्यते तन्न पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्)।

५७—शक्तिग्राहकाः.. सोदाहरणं व्याख्यायन्ताम् अथवा शक्तिग्रहं व्याकरणोपमान" मित्यादि कारिका व्याख्यायताम्।

"शक्तिग्रहं व्याकरणोपमानकोशाऽऽप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।" वृद्धा एतेभ्य उपायेभ्यः शक्तिग्रहं वदन्ति। तथा हि तत्र (१) व्याकरणाद् यथा—धातु-प्रकृति-प्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति यथा "भू" सत्तायाम्, 'गम्लृ' गतौ, प्रातिपदिकार्थे प्रथमा' कर्तरि कृद् इत्यादि।

(२) उपमानात् शक्तिग्रहो यथा—"गोसदृशो गवयः" इत्यत्र गवयपदस्य 'गवयो गवयपदवाच्यः' इति गवये शक्तिग्रहः।

(३) कोषात् शक्तिग्रहो यथा—'अमरा निर्जरा देवाः' इत्यादीनां देवताद्यर्थे शक्तिग्रहः। (कोषकृतश्चायं शक्तिग्रहः सति बाधके त्यज्यतेऽपि, यथा "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोषेण-शुक्लनीलादीनां पदानां शुक्लनीलादिरूपे तद्विशिष्टे च शक्तिरुक्ता, तत्र लाघवात् शुक्ल-नीलादिगुणे एव शक्तिः, तद्विशिष्टे तु लक्षणा)।

(४) आप्तवाक्याद्-आप्तो यथार्थवक्ता, तद्वाक्यादपि शक्तिग्रहो यथा—"कोकिलः पिकपदवाच्यः"-इत्यादि वाक्यात् कोकिले पिकपदशक्तिग्रहः।

(५) व्यवहारात् शक्तिग्रहो यथा—प्रयोजक-वृद्धो 'घटमानय' इत्युक्तवान् प्रयोज्य-वृद्धश्च तच्छ्रुत्वा घटमानीतवान्, तद्व्यवहारमवधार्य व्युत्पद्यते पार्श्वस्थो बालः—घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्य-

मिति । अथ "घटं नय, गामानय" इत्यादौ आवापोद्वापाभ्याम् । (अन्वय-व्यतिरेकाभ्याम्) घटादिपदानां घटाद्यर्थे शक्तिं गृहणाति ।

(६) वाक्यशेषात् शक्तिग्रहो यथा—"यवमयश्चरुर्भवति" इत्यत्र "अथान्या, ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति" इति वाक्यशेषाद् यवशब्दस्य दीर्घशूके शक्तिर्निर्णीयते । म्लेच्छानां कङ्गौ यवशब्दप्रयोगस्तु शक्तिभ्रमादेव ।

(७) विवरणादपि भवति शक्तिग्रहः—तत्र विवरणम् तत्समानार्थक-पदान्तरेण तदर्थकथनम् । तत्पर्यायवाचकशब्देन तदर्थकथनमिति यावत् । यथा "घटोऽस्ति" इत्यस्य "कलशोऽस्ति" इत्यनेन विवरणात्, घटपदस्य कलशे शक्तिग्रहः ।

(८) प्रसिद्धपदसान्निध्यात् शक्तिग्रहो यथा–'इह सहकारतरौ मधुरं पिको रौति' इत्यत्र सहकारतरुशब्दस्य प्रसिद्धपदस्य सान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहः ।

**५८—वैयाकरणानां मते आख्यातस्य (तिङन्तस्य) कुत्र शक्तिः किं तत्र नैयायिकानां मतम् ? सर्वमिदं स्पष्टीक्रियताम् ।**

वैयाकरणैर्हि 'लःकर्मणि च भावे चाकर्मकेभ्यः' इतिसूत्रप्रमाणेन आख्यातस्य कर्तरि शक्तिरुच्यते 'चैत्रः पचती" त्यादौ चैत्रस्य कर्त्रा सहाऽभेदा-न्वयः स्वीक्रियते, पाककर्त्रभिन्नश्चैत्र इत्यर्थः, तच्चेदं नैयायिका न मन्यन्ते, ते हि लाघवात् कृतौ शक्ति स्वीकुर्वते । अयम्भावः-वैयाकरणमतानुसारं कर्तरि शक्तिस्वीकारे शक्यतावच्छेदकः कर्तृनिष्ठ धर्मविशेषः कृतिरेव स्यात् । सा च प्रतिकर्तृ भिन्नेति शक्यतावच्छेदकनानात्वप्रसङ्गाद् गौरवं स्पष्टमेव । कृतौ शक्तिस्वीकारे तु शक्यतावच्छेदको धर्मः कृतित्वजा-तिरेकैवेति स्पष्टं परमलाघवम् । शाब्दबोधे च कृतिश्चैत्रादौ प्रकारीभूय भासते ।

'चैत्रः पचती' त्यादौ च पाकानुकूलकृतिमांश्चैत्र इति शाब्दबोधः । नचैवं कृतौ शक्तिस्वीकारे कर्तुरनुक्तत्वात् कर्तृकरणयोस्तृतीयेति' शासनात् चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्, कर्तृसंख्याभिधानस्य तत्र

तन्त्रत्वात् । अर्थात्—कर्तृगतसंख्याया आख्यातेनाऽबोधने भवति कर्ताऽनभिहितः ( अनुक्तः ) इति तत्र विवक्षितत्वात् । अत्र च आख्यातस्य कृतौ शक्तिस्वीकारेऽपि तेन कर्तृसंख्याभिधानात् । न कर्तुरनुक्तत्वम् । तथा च न तृतीयापत्तिः । ( संख्याभिधान-योग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । इतरविशेषणत्वेन तात्पर्याऽविषयत्वमिति प्रथमदलार्थः । तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः । अथवा—धात्वर्थातिरिक्ताऽविशेषणत्वं तदर्थः । 'स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय द्वितीयदलं द्वितीयान्तपदोपस्थाप्यत्वात् तद्वारणम् । )

५९—मीमांसका आख्यातस्य कुत्र युक्तिं स्वीकुर्वंते ? तच्चयुक्तमयुक्तं वेति निरूपयत ।

मीमांसका हि आख्यातस्य व्यापारे शक्ति स्वीकुर्वंते । 'चैत्रः पचती' त्यादौ च व्यापारविशेष्यकं शाब्दबोधं ब्रुवते । तत्रापि व्यापारत्वस्य जन्यत्वादिघटितत्वेन कृतित्वापेक्षया गौरवात् कृतावेव शक्तिस्वीकारः श्रेयान् । नच कृतौ शक्तिस्वीकारे 'रथो गच्छती'—त्यादौ कथं स्यात् सामञ्जस्यम् ? रथस्याऽचेतनत्वेन कृत्याश्रयत्वाऽयोगादिति वाच्यम्,—तत्र कृत्यर्थस्य वाधे 'गच्छती'त्यस्य गमनानुकूलव्यापारे व्यापाराश्रयत्वे वा लक्षणास्वीकारात् । एवं "जानाती"—त्यादौ आश्रयत्वे "नश्यती"त्यादौ प्रतियोगित्वे च निरूढलक्षणा ( अनादितात्पर्यविषयवती लक्षणा ) इति ।

६०—मीमांसकाः ( प्राभकाराः ) घटादिपदानां ( अन्वितेऽनन्विते ) कुत्र शक्तिं स्वीकुर्वंते ? नैयायिकानां किं तत्र मतम् ?

प्रभाकरा हि उत्तम–मध्यम–वृद्धव्यापारे 'घटमानय' इत्यादिरूपेण प्रयुज्यमानानां घटादिपदानां कार्यान्वित–घटादौ शक्ति स्वीकुर्वंते, अत एव च 'भूतले 'नीलो घटः' इति प्रयोगे न शाब्दबोधः । इति ब्रुवते । कार्यताबोधकलिङ्गादि प्रयोगाभावात् । इति ।

तच्चेदं नैयायिका न सहन्ते, तथा हि-व्यवहारे प्रथमतः कार्यान्वित-घटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य भवति परित्याग एवो-

चितः। तथा च घटपदस्य घटमात्रे शक्तिः। अत एव 'चैत्र पुत्रस्ते जातः, कन्या ते गर्भिणी जाता' इत्यादौ कार्यता-बोधकलिङ्गाद्यभावेऽपि भवत्येव शाब्दबोधः। नच तत्र 'तं पश्य' इत्यादि शब्दान्तरमध्याहार्यं मानाभावात् 'चैत्र पुत्रस्ते जातो मृतश्चे' त्यादौ तदध्याहारासम्भवाच्च।

६१—जातौ शक्तिर्व्यक्तौ वेति निर्धारयत।

जातावेव शक्तिरिति मीमांसकाः, तेषामयमाशयः—यद्यपि अर्थ-क्रियाकारितया व्यक्तौ शक्तिरुचिता प्रतिभाति, किन्तु तथा सति (व्यक्तीनामानन्त्यात्) एकस्यां व्यक्तौ शक्तिस्वीकारेऽपरस्या बोधो न स्यादिति व्यभिचारः। प्रतिव्यक्तिशक्तिस्वीकारे च शक्तीनामानन्त्यं स्याद् इति व्यभिचारानन्त्यदोषपरिहाराय जातावेव स्वीकरणीया शक्तिः। नच जातौ शक्ति-स्वीकारे व्यक्तिभानं शाब्द-बोधे न स्यादिति वाच्यम्, व्यक्तिं विना जातिभानस्याऽसम्भवत्वेन व्यक्तेरपि—आक्षेपविधया भानसभम्वात् इति।

तदिदं नैयायिका व क्षमन्ते शक्तिं विना व्यक्तिभानं शाब्दबोधेऽसम्भववम्, आक्षेपलभ्यस्य हि न भवति शब्दान्वये प्रवेशः। नच व्यक्तेर्लक्षणया बोधः स्यादिति वाच्यम्, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। तस्माद् व्यक्तावेव शक्तिः स्वीकरणीया न तु जातौ। नच तथा सति व्यभिचार आनन्त्यं वा शङ्क्यं सकलव्यक्तिषु एकस्या एव शक्तेः स्वीकारात्। न च व्यक्तीनाम् अननुगमः गोत्वादिजातेरेवानुगमत्व-सम्भवात्। किञ्च जातौ शक्तिग्रहे गोत्व-प्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्, शक्तिज्ञानस्य हि समान-प्रकारकत्वेन पदार्थस्मरणं शाब्दबोधं च प्रति हेतुत्वं भवति शक्तिज्ञाने गोत्वत्वं प्रकारः पदार्थस्मरणे शाब्दबोधे च गोत्वमिति वैषम्यम्।

अथ च जातौ शक्तिस्वीकारे (गोत्वे यदि शक्तिः) गोत्वत्वं शक्यतावच्छेदकं वाच्यम्, गोत्वत्वं च गवेतरासमवेतत्वे सति सकल-गोसमवेतत्वम्, तथा च सकलगोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्, महद्गौरवं स्यादिति जात्याकृतिविशिष्टव्यक्तावेव शक्तिस्वीकारः श्रेयान्।

६२—( शक्त )—पदभेदान् सोदाहरणं व्याख्यात।

शक्तं पदम् तत्-चतुर्विधम् (१) यौगिकम् (२) रूढम् (३) योगरूढम् (४) यौगिकरूढं चेति।

(१) तत्र यौगिकम्-यत्रावयवार्थ एव बुद्धयते तद् यौगिकम्—यथा—पाचकः, पाठकः, इत्यादीनि, एषु हि पचतीति पाचकः, पठतीति पाठकः, इत्येवमयवार्थं एव बुध्यते।

(२) रूढम् यत्रावयवशक्तिनिरपेक्षया समुदायशक्तिमात्रेणार्थो बुद्ध्यते तद्रूढम्'यथा—गो-मण्डलादिपदम्। अत्र समुदायशक्त्या रूढ्या) (एव गवाद्यर्थबोध इति।

(३) योगरूढम्-यत्रावयवशक्तिविषये समुदायशक्तिरप्यस्ति, तद् योगरूढम्। यथा पङ्कजादिपदम्। अत्र हि पङ्कजपदम् अवयव-शक्त्या (पङ्काज्जातं पङ्कजमिति। पङ्क-जनि-कर्तृत्वरूप-मर्थं बोधयति, समुदायशक्त्या (रूढ्या) च पद्मत्वेन रूपेण पद्मं बोधयति–इति। (नच केवलयाऽवयवशक्त्या पङ्कजपदस्य कुमुदे प्रयोगः स्यादिति वाच्यम्। रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वाद् इति वदन्ति प्राचीनाः। नवीनाश्च समुदायशक्त्युपस्थित–पद्मेऽवयवार्थस्य पङ्कजनिकर्तुरन्वयो भवति सान्निध्यात्। रूढ्यर्थस्य बाध–प्रतिसन्धाने तु लक्षणतया कुमुदादेर्बोधः। कुमुदत्वेन बोधे तात्पर्याऽभावे पद्मत्वस्य च बाधेऽवयवशक्तिमात्रेणापि निर्वाह इत्याहुः। अवयवार्थ-बाधस्थले (स्थलपद्मादौ) समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैव तत्र पङ्कजशब्दप्रयोगः इति)।

(४) यौगिकरूढम्-यत्रावयवार्थ-रूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्-यौगिक-रूढम् यथा–उद्भिदादिपदम्। अत्राह उद्भिनत्ति इत्युद्भेदन-कर्ता तरु-गुल्मादिरिति स्वतन्त्रतयाऽवयवार्थबोधः। समुदायशक्त्या च स्वातन्त्र्येण यागविशेषरूपार्थोऽप्यवबुध्यते।

६३—का नाम लक्षणा? किं च लक्षणायां बीजम्?। तद् भेदाश्च के? सर्वमिदं स्फुटं निरूपयत।

"शाब्दबोधे हि पदजन्य–पदार्थस्मरणं व्यापारः, तत्रापि वृत्या पद-जन्यत्वं बोध्यम्, वृत्तिश्च शक्तिलक्षणान्यतर-सम्बन्धः" इत्युक्तं तत्र का नाम लक्षणेत्युच्यते—

लक्षणा शक्यसम्बन्धरूपा, तात्पर्यानुपपत्तिस्तस्या बीजम्। सा चेयं क्वचिद् जहत्स्वार्था, क्वचिद् अजहत्स्वार्थेति द्विविधा। तत्राद्या—यथा "गङ्गायां घोषः" इत्यादौ गङ्गापदस्य शक्यार्थे भगीरथ-रथखातावच्छिन्न-जलप्रवाहरूपे घोषस्याऽऽधेयतयाऽन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च प्रति-सन्धीयते, तदा लक्षणया तीरस्य बोधो भवति। (अत्र गङ्गापदं स्वार्थं सर्वथा जहातीति जहत्स्वार्थेयम्)। अजहत्स्वार्था यथा—"छत्रिणो यान्ति" इत्यत्र छत्रिपदस्य—एकसार्थवाहित्वे लक्षणा। एकसार्थवाहि-त्वेन छत्रितदन्ययोर्बोधादियमजहत्स्वार्था।

### लक्षणाबीजविचारः

अन्वयानुपपत्तिरेव लक्षणाबीजमिति केचित्, तात्पर्यानुपपत्ति-र्लक्षणाबीजमित्यपरे। (सत्यामपि अन्वयानुपपत्तौ तात्पर्यानुपपत्ति-रवश्यं स्यात् तदेव बीजमिति भावः यदि केवलमन्वयानुपपत्तिरेव लक्षणाबीजं स्वीक्रियेत, तदा "यष्टीः प्रवेशय" इत्यत्र लक्षणा न स्यात् तत्र यष्टिषु प्रवेशनक्रियान्वयानुपपत्तेरभावात्। भोजनतात्पर्यानु-पपत्त्या तु यष्टिपदस्य भवति यष्टिधरेषु लक्षणा। किंच "काकेभ्यो दधि रक्ष्यता"मित्यत्रापि काकपदस्य तात्पर्यानुपपत्त्यैव दध्युपघातक-मात्रे लक्षणा। अन्यथा न स्यात् लक्षणा अन्वयानुपपत्तेरभावात्। (अत्र हि सर्वतो दधिरक्षायां तात्पर्यं ततो भवति लक्षणा)। इति सिध्यत्यन्वय-व्यतिरेकाभ्यां तात्पर्यानुपपत्तिर्लक्षणाबीजम्।

यत्र परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणा यथा द्विरे-फपदे, अत्र हि द्विरेफपदस्य सम्बन्धो रेफद्वयविशिष्टे भ्रमरपदे—ज्ञायते। भ्रमरपदस्य च तद्वाच्ये जीवविशेषे इति। (किञ्च यथा शक्तिः पदे एव न वाक्ये तथैव लक्षणाऽपि पदे एव न वाक्ये "गम्भीरायां नद्यां घोषः" इत्यत्र तु क्वचिद् (चैत्रस्य गुरुकुलमित्यादौ। एकदेशान्वयस्यापि

स्वीकृतत्वात् नदोपदस्य नदीतीरे लक्षणा गम्भीरापदार्थस्य नद्या सहाऽभेदान्वयः। एकदेशान्वयस्य स्वीकाराभावे तु नदीपदस्य गम्भीर-नदीतीरे लक्षणा गम्भीरा-पदं च तात्पर्यग्राहकमिति।

लाक्षणिकं च पदं न शाब्दबोधजनकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितशक्यार्थ-शाब्दबोधं प्रति पदानां सामर्थ्यावधारणात्)।

६४—कस्मिन् कस्मिन् समासे, लक्षणेति, विशदं प्रदर्शयत।

बहुव्रीहौ, तत्पुरुषे, समाहारे, एकशेषे, अव्ययीभावे च भवति लक्षणा। तथाहि—

(१) बहुव्रीहौ—"चित्रगुः", इत्यादौ एकदेशान्वयस्वीकारे तु, गोपदस्य गोस्वामिनि लक्षणा, गोपदार्थे च चित्रपदादेस्याऽभेदान्वयः चित्राऽभिन्नाया गोः स्वामीति शाब्दबोधः। अथ यदि एकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकम्। (एवमारूढवानरो वृक्षः, इत्यत्र वानर-पदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम्।)

(२) तत्पुरुषे—"राजपुरुषः" इत्यादौ राजपदार्थस्य पुरुषपदार्थेन सह साक्षादन्वयस्तु न सङ्गच्छते, तथा सति राजाऽभिन्नः पुरुष इत्यर्थः स्यात् "निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधोऽव्युत्पन्न" इति नियमात्। स चाथमर्थो नेष्टः। नचात्र राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्पनीयमिति वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयाद्। तस्माद् राजपदस्य राजसम्बन्धिनि लक्षणा तस्य च पुरुषेण सहाऽभेदान्वयः।

(३) द्वन्द्वे तु—"धवखदिरौ" इत्यादौ विभक्त्यर्थद्वित्वप्रकारेण धवः खदिरश्च बुद्ध्यते इति न तत्र लक्षणा। नचात्र धव-खदिर-साहित्ये लक्षणा स्यादिति वाच्यम्। "हिमविन्ध्यौ" इत्यादौ साहित्यशून्ययोरपि द्वन्द्व-दर्शनात्। ननु—एकक्रियान्वितत्वं साहित्यं तच्चात्राप्यस्तीति तदेव प्रकृतेऽभिमतं स्यादिति चेन्न, "धवखदिरौ पश्य छिन्धि" धवं पश्य खदिरं छिन्धि, इत्यादि क्रियाभेदेऽपि द्वन्द्वदर्शनात् साहित्यस्याऽनुभवाच्च।

( ४ ) समाहारे—"अहिनकुलमि'त्यादौ समाहारोऽनुभूयतेऽतः—

परपदस्य अहि-नकुल-समाहारे लक्षणा, पूर्वपदं तात्पर्यग्राहकम्। "भेरीमृदङ्गं वादय", इत्यादौ चापेक्षाबुद्धिविशेष-रूपस्य समाहारस्य साक्षाद् वादनक्रियान्वयाऽसम्भवेऽपि स्वाश्रयवृत्तित्वरूप-परम्परा-सम्बन्धेन तदन्वये नास्ति काऽपि विप्रतिपत्तिः, स्वं समाहारः, तदाश्रयो भेरी मृदङ्गश्च, तद्वृत्तित्वं च वादनक्रियाया इति।

( ५ ) एकशेषे—"पितरौ श्वशुरौ इत्यादौ पितृपदस्य जनकदम्पत्योर्लक्षणा। श्वशुरपदस्य च स्त्रीजनक-दम्पत्योर्लक्षणा। ( घटाः इत्यादौ तु घटत्वेनैव नानाघटोपस्थितिसम्भवान्न लक्षणा )।

( ६ ) कर्मधारये—"नीलोत्पल"मित्यादौ कर्मधारयस्थले तु न लक्षणा। अभेदसम्बन्धेन नीलपदार्थस्य उत्पलपदार्थेऽन्वयात्। अत एव "निषादस्थपतिं याजयेत्" इत्यत्र कर्मधारयः स्वीक्रियते लक्षणाऽभावेन लाघवात्, न तु तत्पुरुषो लक्षणापत्तेः। ( निषादस्य सङ्करजातित्वेऽपि अतएव विद्याप्रयुक्तिस्तात्कालिकी कल्पनीया नचैव गौरवं स्यादिति वाच्यम्, लाघवेन मुख्यार्थस्यान्वयो भवतीति फलमुखगौरवस्याऽदोषात्।

( ७ ) अव्ययीभावे-उपकुम्भम्, 'अर्धपिप्पली, इत्यादौ परपदस्य ( कुम्भादेः ) कुम्भादिसम्बन्धिनि लक्षणा पूर्वपदं तात्पर्यग्राहकम् ( इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहात् )।

**६६—शाब्दबोधे कानि कारणानि ? सोदाहरणं तानि व्याख्यायन्ताम् !**

शाब्दबोधे चत्वारि कारणानि ( १ ) आसत्तिः, ( २ ) योग्यता ( ३ ) आकांक्षा, ( ४ ) तात्पर्यज्ञानञ्चेति।

( १ ) तत्राऽऽसत्तिः—यत्पदार्थस्य येन पदार्थेन अन्वयोऽपेक्षितः, तयोरव्यवधानेनोपस्थितिः—आसत्तिः, सा शाब्दबोधे कारणम्। तेन "गिरिभुक्तमग्निमान् देवदत्तेन" इत्यादौ न शाब्दबोधः ( गिरिरग्निमान्, भुक्तं देवदत्तेन इत्यपेक्षितोऽन्वयः ) नास्ति चात्रापेक्षितान्वयानां पदार्थानां अव्यवधानेनोपस्थितिः, पदार्थान्तरैर्व्यवहितत्वात्।

( २ ) योग्यता—एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता, तज्ज्ञानमपि

शाब्दबोधे कारणम् । 'वह्निना सिञ्चति' इत्यादौ च तदभावान्न शाब्दबोधः सेके हि वह्निकरणकत्वसम्बन्धस्य नास्ति सम्भवः । (नव्यास्तु योग्यताज्ञानं न शाब्दबोधे कारणम् । वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वाभावरूपाऽयोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोध इत्याहुः) ।

(३) आकाङ्क्षा—'येन पदेन विना यत्पदस्याऽन्वयानुभावकता तेन सह तस्याकाङ्क्षा इत्यर्थः । यथा क्रियापदं विना कारकपदं नान्वयबोधं जनयति तस्मात्तेन तस्याकाङ्क्षा । तद्भावाच्च "गौरश्वः पुरुषो हस्ती" इत्यादौ न शाब्दबोधः । (वस्तुतस्तु क्रिया-कारक-पदानां सन्निधानमासत्त्या चरितार्थं किन्तु घटगत-कर्मताबोधं प्रति घटपदोत्तरं द्वितीयाऽऽकांक्षा शाब्दबोधे कारणम् । अत एव "घटः कर्मत्वम् आनयनं कृतिः" इत्यादौ न शाब्दबोधः) ।

(४) तात्पर्यज्ञानम्-वक्तुरिच्छा-तात्पर्यम्, तज्ज्ञानं चापि शाब्दबोधे कारणम् । अन्यथा "सैन्धवमानय" इत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात् । तात्पर्यञ्चेदं प्रकरणादिना गृह्यते, नच तथा सति प्रकरणादीनामेव कुतो न कारणत्वं लाघवादिति वाच्यम् । तेषामननुगमात् । (तात्पर्यज्ञानजनकत्वेनानुगमे तु लाघवेन तदेव कुतो न कारणं स्यात्) ।

अतएव च वेदस्थले तात्पर्यज्ञानार्थमीश्वरः स्वीक्रियते । सर्गादावध्यापकाभावेन अध्यापक-तात्पर्यज्ञानं तु न युज्यते कारणीभवितुम् । शुकादिवाक्येऽपि शिक्षयितुरीश्वरस्य वा तात्पर्यज्ञानं कारणमिति ।

६६—ननु—अव्यवधानेनोपस्थितिरासत्तिः, अनेकपदघटितवाक्ये सा न सम्भवति, कथं तत्र शाब्दबोधः स्यात् (इत्यवान्तरप्रश्नः) ।

ननु 'छत्री कुण्डली वासस्वी देवदत्त" इति यत्रोच्येत, तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तत्तत्पदस्मरणाऽसम्भवाच्छाब्दबोधो न स्यादिति चेन्न, प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयक-स्मरणस्याऽव्यवधानेन सम्भवात् । यथा नाना-सन्निकर्षैर्भवत्येकं प्रत्यक्षम् तथा नाना-संस्कारैः सम्भवति एकं स्मरणमपि । उद्बोधकं चात्र तावत्पदसंस्कारसहितं चरमवर्णविज्ञान-

मेव । कथमन्यथा नानावर्णैरेकपदस्मरणमपि सम्भवेत् ।

६७—अन्वयविषयको विचारः

तत्र तावतां पदार्थानां स्मरणादेकदैव खले कपोतकन्यायात्पदार्थानां क्रियाकारकभावेनाऽन्वयबोधरूपः शाब्दबोधो जायते—

"वृद्धा युवानः शिशवः कपोता खले यथामी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति" । इति केचित् ।

अपरे च—क्रमेणान्वयो भवतीति मन्यन्ते ते चाप्याहुः—यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥ इति । एवं खण्डवाक्यार्थबोधानन्तरं तथैव भवति महावाक्यार्थबोधोऽपि ।

६८—"द्वार" मित्युक्ते "पिधेहि" इति पदस्यैव किमिति अध्याहार आवश्यकः तदर्थाक्षेपेणैव शाब्दबोधः किन्न स्यात् ?

तत्रेदमुच्यते "शाब्दो ह्याकाङ्क्षा शब्देनैव पूर्यते' इति । अत एव यत्र द्वारमित्युक्तम्, तत्र पिधेहि इति पदस्य ज्ञानादेव शाब्दबोधः । ( न तु-अर्थमात्राक्षेपेण ) पदजन्यपदार्थ-स्मृतिः शाब्दबोधे हेतुरिति नियमात् । क्रियाकारक-पदानां स्व-स्वरूपैणैवाऽऽकांक्षितत्वात्, अन्यथा "पुष्पेभ्य' इत्यत्र कथं स्याच्चतुर्थ्युपपत्तिः । "स्पृहेरीप्सितः," इतिशास्त्रेण स्पृहति शब्दयोगे एव चतुर्थी विधानात् ( अतः पदाक्षेप आवश्यक इति सिध्यति )

इति शब्दखण्डः ।

# स्मृतिप्रक्रिया

६९—अथ का नाम स्मृतिः ? । लक्षणं स्वरूपमुदाहरणं च प्रदर्श्यताम् । किञ्च तत्र पूर्वानुभवस्य अनुभवत्वेन कारणता अथवा ज्ञानत्वेनेति सर्वं सम्यक् स्पष्टीक्रियताम् ।

स्मृतिः = स्मरणम् । संस्कारजन्यं ज्ञानं स्मृतिः । अनुभवात्संस्कारः संस्काराच्च स्मृतिर्जायते । पुरुषो हि यत्किञ्चित्पश्यति शृणोति स्पृशति जिघ्रति वा, तदेतस्मादनुभवात्तस्य तत्तद्वस्तुविषयकाः संस्कारा जायन्ते, ते च मनसि निभृतास्तिष्ठन्ति । उद्बोधकविशेषा-

चघोद्बुद्धास्तत्तद्विषयिकां स्मृतिं जनयन्ति । घटविषयकादनुभवाद् घटविषयकः संस्कारः उद्बुद्धाच्च घटविषयकात्संस्काराद् घटविषयिका स्मृतिर्जायते इति । पूर्वानुभवः स्मृतौ कारणम्, स च संस्कारद्वारा स्मृतिं जनयतीति स्फुटो भावः ।

( अनुभवस्याऽनुभवत्वेन ज्ञानत्वेन वा कारणता )

अत्र केचिद् अनुभवस्य स्मृतिं प्रति ज्ञानत्वेन ( सामान्यधर्मेण ) कारणत्वमामनन्त, स्मरणानन्तरं च स्मरणं नियामकत्वेनोद्गिरन्ति, अन्यथा ( अनुभवत्वेन—विशेषधर्मेण कारणत्वे ) समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्स्मरणानन्तरस्मरणं न स्यात् । स्वमते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं स्मरणं भविष्यतीत्याहुः ।

तदेतन्न विचारचारु । सकृत्स्मरणस्य संस्कारनाशकत्वाऽभावात् । नहि एकवारं संस्कारः स्मृतिमुत्पाद्य विनश्यति, प्रत्युत स दृढो भवति, ततश्च सहस्रधाऽपि स्मरणानन्तरं स्मरणं जनयितुं क्षमते । संस्कारस्य नाशकस्तु भूयान् कालो, विशिष्टो रोगः, अन्तिमं फलं ( स्मरणं ) वा भवति । नचापि विनिगमक-विरहादेवाऽनुभवस्य स्मृतिं प्रति ज्ञानत्वेनापि कारणत्वं स्यादिति वाच्यम् । विशेषधर्मेण कारणत्वस्वीकारेण दोषाभावे सामान्यधर्मेण कारणत्वस्वीकारस्याऽन्यथासिद्धत्वात् । कथमन्यथा दण्डस्य भ्रमिद्वारा घटं प्रति द्रव्यत्वेन कारणत्वं न स्यात् । ( किमिति मन्यते दण्डत्वेनैव कारणत्वम् ) इति ।

## मनोनिरूपणम्

७०—मनः सम्यङ्, निरूप्यताम् । किमिदं मनस्तत्सिद्धिश्च कथम् ? । मनोऽणु विभु वा सङ्कोचविकाशशीलं मध्यमपरिमाणं वा ? ।

अन्तरिन्द्रियं मनः । सुखादि-साक्षात्कार एव तत्साधको हेतुः । सर्वोऽपि साक्षात्कारः, सकरणकः यथा—रूपसाक्षात्कारश्चक्षुःकरणकः, शब्दसाक्षात्कारः श्रोत्रकरणकस्तथा सुखसाक्षात्कारोपि सकरणक एव स्यात् । तत्र यत्करणं तदेवान्तरिन्द्रियं मन इति । नच सुखसाक्षात्का-

रवद् दुःखादि-साक्षात्काराणामपि करणान्तराणि सिद्धयेयुरिति वाच्यम्, लाघवेन सुखसाक्षात्कारकरणतया सिद्धेनैकेनैव तादृशसकल-साक्षात्काराणां सम्भवात्। तच्चेदमभिप्रेत्योक्तं मूले-

"साक्षात्कारे सुखादीनां करणं मन उच्यते" ॥

( मनसोऽणुत्वम् )

तदेतन्मनोऽणु, न विभु । विभुत्वे हि चाक्षुष-रासन—स्पार्शनादि-ज्ञानानां यौगपद्यं स्यात्। विभु हि सर्वेन्द्रियसंयोगि स्यात्, इन्द्रियाणां च विषयैरेकदाऽनेकेषां सम्बन्धोऽस्त्येवेति युगपद् अनेकानि ज्ञानानि उत्पद्येरन्, न चोत्पद्यन्ते, तदेतज्ज्ञानानामयौगपद्यं मनसोऽणुत्वे ( प्रतिशरीरमेकत्वे ) लिङ्गम्। मनो ह्यणु, सत्यपि विषयैरनेकेषामिन्द्रियाणामेकदा सम्बन्धे न सर्वैरिन्द्रियैरेकदा सम्बद्धुमर्हति, पर्यायेण तु सम्बध्यते, ततः पर्यायेणैव ज्ञानानि भवन्ति । ततो न विभु मनः ।

नच दीर्घशष्कुलीभक्षणे तदीय उष्णःस्पर्शो, मधुरो रसः, सौरभं चैकदैव ज्ञायते इति कथमेकदा नानेन्द्रियजन्यज्ञानमिति वाच्यम्। मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः, अर्थात् नात्रैकदा नाना-ज्ञानोत्पत्तिर्जाता किन्तु पर्यायेणैव, त्वरानिमित्तिका त्वियं भ्रान्तिरेकदाऽनेकज्ञानोत्पत्तिरिति । सूचिकया उत्पलपत्राणां शतस्य वेधने यथा।

ननु मनो न विभु नाप्यणु अपि तु सङ्कोच-विकासशीलं मध्यम-परिमाणं मन्यतां तेनोभयोपपत्तिः स्यात् । सङ्कुचिते तस्मिन् एकदा एकमेव ज्ञानं स्यात् । विकसिते च एकदापि नानेन्द्रियसम्बन्धान्नाना ज्ञानानि स्युः, इति चेन्न, मध्यमपरिणामत्वे नानावयव-तन्नाशादि-कल्पने गौरवात्, लाघवेन निरवयवस्याणुरूपस्यैव मनसः कल्पनं साधु—इति ॥

# अथ गुणखण्डः

७१—गुणत्वजातिसिद्धिः प्रदर्श्यताम् । गुणानां लक्षणं च विशकलय्य प्रतिपाद्यताम् ।

सर्वगुणेषु आपामरसाधारणो गुणशब्दप्रयोगो नास्तीति गुणत्वजातौ प्रत्यक्षप्रमाणाभावात्तत् सिद्धावनुमानमेव प्रमाणम्, तद्यथा सर्वत्र कारणता किञ्चिद्धर्मावच्छिन्नैव दृष्टा न क्वापि निरवच्छिन्ना इति द्रव्यकर्म-भिन्ने सामान्यवति ( रूपादौ ) या कारणता सापि किञ्चिद्धर्मावच्छिन्नैव स्यात् । नच रूपत्वादिकं सत्ता वा तत्रावच्छेदिका भवितुमर्हति । रूप-त्वादेन्यू॑न-वृत्तित्वात्, सत्तायाश्चातिरिक्तवृत्तित्वात् । अन्यूनानतिरिक्त-वृत्ति-धर्मस्यैव अवच्छेदकत्व-नियमात् । अतः सोऽयं धर्मो रूपादि-चतु-र्विंशत्यनुगतो गुणत्वरूप एव मन्तव्यो यदवच्छिन्ना सा कारणता भविष्यति । अनुमानप्रयोगश्च—"रूपादिनिष्ठा कारणता किञ्चिद्धर्मावच्छिन्ना कारण-तात्वात् द्रव्यनिष्ठ कारणतावदि"ति ।

## गुणलक्षणम्

द्रव्याश्रितत्वं गुणानां लक्षणम् । नचेदं कर्मण्यतिव्याप्तं तस्यापि द्रव्याश्रितत्वादिति वाच्यम्, द्रव्याश्रितत्वमित्यस्य द्रव्यत्व-व्यापकता-वच्छेदकसत्ताभिन्नजातिमत्त्वमित्यर्थे तात्पर्यात् । गुणत्वमेव द्रव्यत्व-व्यापकतावच्छेदकम्, तद्वत्त्वं च गुणानामस्त्येवेति लक्षणसमन्वयः । द्रव्यत्वं कर्मत्वं वा न द्रव्यत्व-व्यापतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावात् ।

एवं सत्तावत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वमित्यपि गुणानां लक्षणं बोध्यम् । सामान्यादेर्न सामान्यवत्त्वं कर्मणो न कर्मा-न्यत्वं, द्रव्यस्य न निर्गुणत्वमिति व्याप्तिः ॥ इति ॥

७२—कर्बुरं ( चित्रं ) रूपमतिरिक्तमस्ति न वा ? । अत्र पूर्वपक्षमुद्भाव्य सिद्धान्तः प्रदर्श्यताम् ।

रूपं हि शुक्ल-–नील--पीत--रक्त-हरित-कपिश-कर्बुर-भेदेन सप्त-विधम् । कर्बुरं चित्रमित्यर्थः । तत्रायं विचारोपक्षेपः, चित्ररूपं कुतो-ऽतिरिक्तं कल्प्यते, एकत्र स्थितं नानारूपमेव हि चित्रम् । तत्रोच्यते

नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीलरूपो भवितुमर्हति, अन्यथा अप्रत्यक्षत्वप्रसङ्गः स्यात्। अतस्तत्रावयविनि जायते किञ्चिद्रूपं यन्नीलादिभ्यो विजातीयमनुभवसिद्धम्। तच्चित्रमेव। न च व्याप्यवृत्ति-नीलादिकमेवोत्पद्यते इति वाच्यम्, पीताद्यवच्छेदेनापि नीलाद्युपलब्धि-प्रसङ्गात्। नापि अव्याप्यवृत्तिनीलादिकमुत्पद्यतामिति वक्तुं शक्यम्, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। नीलादीनां पीता-द्यारम्भे पीतादीनां च नीलाद्यारम्भे प्रतिबन्धकत्व-कल्पनाच्चाऽवयविनि न नील-पीताद्युत्पत्तिः, अपि तु विजातीयं चित्ररूपमेवोत्पद्यते, नीलादीनां-पीतादि-प्रतिबन्धकत्वकल्पने गौरवात्। अत एव च—

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः
श्वेतः खुर-विषाणाभ्यां स नीलो वृष उच्यते" ॥

इत्यादि शास्त्रमुपपद्यते। नचास्ति व्याप्याऽव्याप्यवृत्तिजातीययोः कश्चि-द्विरोधो मानाभावात्। नच लाघवादेकं रूपम् (चित्रम्) इति वाच्यम्, अनुभवविरोधात्। अन्यथा घटादेरपि लाघवादैक्यं स्यादिति वदन्ति।

७३ — रूप — रस — गन्ध — स्पर्शाः पृथिव्यां पाकजा इति प्रतिपादितम्, तत्र पृथिवीपरमाणुषु पाकः अथवा द्व्यणुकादौ अवयविनि पाक इति व्यवस्थाप्यताम्।

परमाणुष्वेव पाक इति वैशेषिकाः। द्व्यणुकादाववयविन्यपि रूपा-दीनां पाक इति नैयायिकाः। तत्र परमाणुष्वेव रूपादीनां पाक इति वादिनां वैशेषिकाणामयमभिप्रायः-अवयविनाऽवष्टब्धेषु अवयवेषु पाको न सम्भवतीति वह्निसंयोगेन अवयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु

---

प्रत्यक्षखण्डवदत्रापि केचित् साधारणाः प्रश्नाः प्रदीयन्ते टिप्पण्यां ते च परीक्षार्थिभिश्छात्रैः स्वयमभ्यासार्थं समाधाय लेख्याः।

(१) अथ के मूर्तगुणाः ?। के चाऽमूर्तगुणाः ?। उभयगुणाश्च के ?
(२) अनेकवृत्तयः के ?। एकवृत्तयश्च के ?
(३) विशेष गुणाः के ?। सामान्यगुणाश्च के ?।
(४) द्वीन्द्रियग्राह्या एकेन्द्रियग्राह्याश्च गुणाः के ?।
(५) अथ के अकारणगुणोत्पन्नाः ?।

पाकः । पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः । तेजसाम् अतिशयवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति ।

नैयायिकानां तु मतेऽवयविनां सच्छिद्रत्वाद् वह्नेः सूक्ष्मावयवैरन्तः प्रविष्टैरवष्टब्धेष्वपि अवयवेषु पाकः सम्भवतीति न कश्चिद्विरोधः । विघटने तु अनन्तावयविनाशपुनरुत्पत्ति-कल्पने भूयो गौरवं स्यात् । इत्थं च "सोऽयं घट" इति प्रत्यभिज्ञापि सङ्गच्छते ॥ इति ॥

(७४) किं नाम पृथक्त्वम् ? । अन्योऽन्याऽभावेनैव कुतो नास्य चरितार्थता ?

पृथक् प्रत्ययाऽसाधारणकारणं-पृथक्त्वम् । ननु "अयमस्मात् पृथग्" इत्यादौ अन्योऽन्याऽभाव एव प्रतायते ततोऽन्योन्याभाव एवायमिति

---

( ६ ) के कर्मजा गुणाः ? ।

( ७ ) केषां गुणानामसमवायिकारणत्वम् ? । केषां च निमित्तकारणत्वम् ? । उभयथाकारणत्वं च केषाम् ? ।

( ८ ) के प्रादेशिकाः ( अव्याप्यवृत्तयः ) गुणाः ?

( ९ ) किं नाम रूपलक्षणम् ? । कथं रूपजातिः प्रत्यक्षासिद्धा ? कतिविधं च रूपम् ? । स्पष्टमिदं सर्वं प्रतिपाद्यतां ? ।

( १० ) किं नाम रसस्य लक्षणम् ? । कतिविधश्च सः ? । तस्य नित्याऽनित्य-व्यवस्था च कथम् ? ।

( ११ ) गन्धं निरूपयत, तद्भेदान् प्रदर्श्य नित्याऽनित्यत्वं तस्य व्यवस्थाप्यताम् ।

( १२ ) किं नाम स्पर्शत्वम् ? । स्पर्शभेदाश्च के ? । तन्नित्यत्वादिकं च कथम् ? ।

( १३ ) "वैशेषिकमते कतिभिः क्षणैः पुनरुत्पन्नो रूपादिमान् भवति" इति प्रतिपाद्यताम् । क्षणप्रक्रियायां विकल्पाः कथं चेति विशदं दर्शयत ।

( १४ ) सङ्ख्यालक्षणं किम् ? । नित्या अनित्या वा सा ? । तदुत्पत्तिकारणं किम् । किं च विनाशकारणम् ? ।

मन्यताम् मा नाम पृथक्त्वं गुणान्तरं भूदिति। नच पृथक्त्वमस्तु नान्योऽन्याभाव इति वाच्यम्। 'रूपं न घटः' इति प्रतीत्यनापत्तेः, नहि रूपे घटावधिकं पृथक्त्वमस्ति, येन पृथक्त्व-प्रतीतिरियं मन्येत। अतोऽन्योऽन्याभावोऽवश्यमभ्युपेय एवेति चेन्न—

"अयमस्मात् पृथक्" "इदमिदं न" इति नैकरूपा प्रतीतिरपि तु विलक्षणैव, ततो नान्योन्याऽभाव एव पृथक्त्वम्। नचात्र प्रतीतिद्वये शाब्दवैलक्षण्यमेव नार्थवैलक्षण्यमिति वाच्यम्। अर्थभेदाऽभावे "घटात् पृथक् पटः" इतिवत् "घटो न पटः" इत्यत्रापि पञ्चम्यापत्तेः। तस्माद् यदर्थयोगे पञ्चमी सोऽर्थो नञर्थाद् अन्योऽन्याभावतो भिन्न एवेति गुणान्तरं पृथक्त्वं कल्पनीयमेवेति दिक्।

७५—संयोगलक्षणं तद्भेदाश्च सोदाहरणं प्रदर्शयत।[1]

अप्राप्तयोस्तु द्वयोर्द्रव्ययोर्या प्राप्तिः स संयोग इति संयोग-लक्षणम्। तद्भेदास्त्रयः—

(१) अन्यतर-कर्मजः, यथा—श्येन-शैलादि-संयोगः। (२) उभय-कर्मजः, यथा—द्वयोर्मेषयोः संयोगः। (३) संयोगजः संयोगः, यथा—कपाल-तरुसंयोगात्तरुकुम्भसंयोगः। कर्मजश्चापि द्विविधः—

(१) अभिघातः, शब्दहेतुः, यथा—हस्तादिना ताडने। (२) नोदनम्, शब्दाहेतुः, यथा—साधारणतया योगे।

७६—अप्रमायाः किं स्वरूपम्?। तद्भेदाश्च के?। तेषां लक्षणोदाहरणानि दर्शयत।

बुद्धिर्ज्ञानमित्युक्तम्, तद्भेदौ अनुभूतिः स्मृतिश्चेति। अनुभूतेः

---

(१५) अथ का नाम अपेक्षाबुद्धिः?। बहुत्वमपि सङ्ख्याऽस्ति न वा?।
(१६) परिमाणलक्षणं भेदाः, तन्नित्यत्वादि, किंकिजन्यं च तदिति सोदाहरणं प्रतिपाद्यताम्।
(१७) 'परिमाणविनाशश्च कुतो भवति' इतिसोपपत्तिकं दर्शयत।
(१८) विभागलक्षणं भेदाश्च प्रतिपाद्यन्ताम् सोदाहरणम्।
(१९) परत्वमपरत्वं च निरूप्यताम्, तद्भेदा उदाहरणानि च दर्श्यन्ताम्। तदुत्पत्तिनाशश्च चिन्त्यताम्।

प्रत्यक्षादयो भेदाश्चोक्ताः। तत्र प्रकारान्तरेण च बुद्धेर्द्वौ भेदौ अप्रमा प्रमा चेति। तत्र अप्रमायां लक्षणम्-"तदभाववति तत्प्रकारकं ज्ञान-" मिति। तस्याः (अप्रमाया) द्वौ भेदौ (१) विपर्यासः। (२) संशयश्च। तत्र—

विपर्यासः-भ्रमः, शरीरादौ निश्चयात्मकं यदात्मत्व-प्रकारकं ज्ञानम्। शङ्खादौ "पीतः शङ्खः" इत्याकारकं वा ज्ञानम्।

संशयश्च—सन्देहः, एकत्र भावाऽभावप्रकारकं ज्ञानं संशयः। यथा 'स्थाणुर्वा पुरुषो वा"। साधारणादि-धर्मज्ञानं संशयकारणम्। स्थाणुपुरुषोभय-साधारणो धर्म उच्चैस्तरत्वम्।

अप्रमाया जनको हि दोषो भवति। स चायं पित्त-दूरत्वादि-रूपो नानाविधः। 'शुक्तिकायामिदं रजत" मित्यत्र दूरत्वं दोषः। 'पीतः शङ्खः' इत्यत्र पित्तं दोषः। एवमन्यत्रापि।

**७७—अथ का प्रमा?। तज्जनकं च किम्?। प्रमाभेदाश्च के?। किञ्च निर्विकल्पकज्ञानं प्रमा अप्रमा वा?।**

तद्वद्विशेष्यकत्वे सति तत्प्रकारकं च ज्ञानं प्रमा। यथा "घटेऽयं घट" इति घटत्ववद्विशेष्यकं घटत्वप्रकारकं च ज्ञानम्। तद्भेदाश्च प्रत्यक्षानुमित्युपमितिशब्दाश्चत्वारः। यथा अप्रमाया जनको दोषस्तथा प्रमाया जनको गुणः। ते च गुणा अनेके यथा—

(१) प्रत्यक्षे विशेषण-विशेष्य-सन्निकर्षो गुणः। (२) अनुमितौ साध्यवति पक्षे परामर्शो गुणः। (३) उपमितौ शक्ये सादृश्य-ज्ञानं गुणः। (४) शाब्दबोधे योग्यताज्ञानं तात्पर्यज्ञानं वा गुणः।

न प्रमा नाप्रमा निर्विकल्पकं ज्ञानम्।

प्रकारतादि-शून्यं सम्बन्धानवगाहि च ज्ञानं निर्विकल्पकं ज्ञानम्। 'इयं गौ" रिति विशिष्टज्ञानात्पूर्वं "इदं किञ्चि"दित्याकारकं गो-गोत्वयोः सम्बन्धानवगाहि यज्ज्ञानं जायते तदेव निर्विकल्पकम्। तदिदं न प्रमा नापि वाऽप्रमा। प्रकारतादि-शून्यत्वात्। प्रमाऽप्रमा च न प्रकारतादि शून्या नापि सम्बन्धानवगाहिनी चेति।

**७८—प्रमात्वं स्वतो ग्राह्यं परतो ग्राह्यं वा?। पूर्वोत्तरपक्षप्रदर्शनपूर्वकमिदं विशदयत।**

मीमांसकाः प्रमात्वं स्वतो ग्राह्यं मन्यन्ते। ज्ञानं हि स्वप्रकाशकम्। ततश्च ज्ञाननिष्ठं प्रामाण्यं (प्रमात्वं) चापि ज्ञानग्राह्यमेवेति गुरवः=प्राभाकराः। भट्टास्तु ज्ञानमतीन्द्रियम् ज्ञानजन्या ज्ञातता च प्रत्यक्षा तया च ज्ञानमनुमीयते इत्याहुः। मिश्राणां मते चानुव्यवसायेन ज्ञानं गृह्यते, इति सर्वेषामपि मीमांसकानां मते तज्ज्ञान-विषयक-ज्ञानेन तज्ज्ञान-प्रामाण्यं गृह्यते इति स्वतो ग्राह्यमेव प्रमा-त्वम् (प्रामाण्यम्) इति। तन्न-संशयानुपपत्तितः।

अयं भावः—यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं स्यात् तदा अक-स्मादुत्पन्ने ज्ञाने यदयम् "इदं जलज्ञानं प्रमा न वा" इति प्रामाण्य-संशयो जायते, स न जायेत। ज्ञाने जाते त्वन्मते प्रामाण्यमपि ज्ञातमे-वेति कुतः संशयः। तस्माज् ज्ञान-निष्ठं प्रामाण्यमनुमानेन गृह्यते, तथा हि—इदं ज्ञानं प्रमा संवादि-प्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथाऽ-प्रमा। एवम्—इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा, गन्धवति पृथिवीत्व-प्रकारक-ज्ञानत्वात् इति।

७९—प्रमालक्षणे तद्वद् विशेष्यकत्वमिति विशेषणस्य सार्थकत्वं पूर्वोत्तर-पक्षप्रदर्शन-पूर्वकं प्रदर्शयत।

अथवा

अन्यथाख्यातौ पूर्वपक्षमुद्भाव्य सिद्धान्तं दर्शयित्वा तां स्थापयत।

ननु सर्वाण्यपि ज्ञानानि यथार्थान्येव, नास्ति किमप्ययथार्थम्। सर्वस्यापि ज्ञानस्यार्थाऽव्यभिचारित्व-नियमात्। अतोऽयथार्थेऽति-व्याप्तिवारणाय दत्तमिदं विशेषणं व्यर्थम्। नच "रङ्गे इदं रजत" मिति ज्ञानम् अयथार्थम्=अन्यथाख्यातिरूपं भवत्येवेति तद्वारणाय विशेषणमिदं स्यात् सार्थकमिति वाच्यम्। रजतप्रत्यक्षकारणस्य रजत-सन्निकर्षस्याऽभावाद् रङ्गे रजतबुद्धेरनुपपत्तेः। न चापि रङ्गे रजतार्थिनःप्रवृत्तिर्भ्रमजन्या न स्यात्तव मते भ्रमस्याभावादिति शङ्क्यम्, तत्र दोषाधीनस्य रजतभेदाग्रहस्यैव हेतुत्वात्। सत्यरजत-स्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणमिति चेन्न।

सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वाद-

न्यत्रापि तथैव कल्पनात्। संवादिप्रवृत्तौ विशिष्टज्ञानं कारणम्, विसंवादिप्रवृत्तौ च भेदग्रहः कारणमिति कुत्रत्योऽयं न्यायः?। सर्वत्रापि प्रवृत्तौ विशिष्टज्ञानस्य कारणत्वे लाघवं चापि। इत्थं च रङ्गे रजतत्व-विशिष्टबुद्धिर्भवत्येव, नच रजतसन्निकर्षो नास्तीति कथं रङ्गे रजतबुद्धिः स्यादिति वाच्यम्, तद्बुद्धिसत्त्वानुरोधेन ज्ञानलक्षणा--प्रत्यासत्तिरूप--सन्निकर्षस्य कल्पनात्। नच गौरवम्, फलमुख-गौरवस्याऽदोषत्वात्। किंचान्यथाख्यातौ अस्ति प्रत्यक्षमेव प्रमाणम्, "रङ्गं रजततयाऽवेदिषम्" इत्यनुभवात्। तत्सिद्धमेतद् यदस्ति अन्यथाख्यातिः = अयथार्थज्ञानम्। तद्वारणाय तद्वद् विशेष्यकत्वमिति विशेषणं परमावश्यकमेवेति।

८०—अथ के व्याप्तिग्रहोपायाः?। इति सविस्तरं प्रतिपादयत। तर्कस्य चोपयोगं दर्शयत।

व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम्, व्यभिचारग्रहो हि व्याप्तिग्रहे प्रतिबन्धक इति तदभावो व्यभिचाराग्रहः कारणम्। सहचारग्रहस्य चान्वयव्यतिरेकाभ्यां व्याप्तिकारणत्वमस्त्येव। भूयो दर्शनं तु न कारणम्, सकृद्दर्शनेऽपि व्यभिचाराऽस्फूर्तौ क्वचिद् व्याप्तिग्रह-सम्भवात्। तर्कश्च क्वचिच्छङ्कानिवर्तकः,—"वह्निविरहिण्यपि धूमः स्या"दिति यद्याशङ्का भवेत् तदा "यद्ययं वह्निमान्न धूमवानपि न स्यात् कारणं विना कार्यानुत्पत्तेः" इति तर्केण निवर्तनीया। यदि पुनरपि शङ्का स्यात् "कारणं विनापि कार्यं स्या"दिति तदा "धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य च नियमत उपादानं न स्यात्" इतिव्याघातेनापसारणीया। क्वचित्स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षाऽपि। इति।

८१—अथ को नामायमुपाधिः सोदाहरणं विवृणुत। तत्स्वरूपं च स्पष्टतया प्रदर्श्य दूषकता—बीजमपि प्रकटीकुरुत।

साध्यव्यापकत्वे सति साधनाऽव्यापकत्वम् उपाधिः। यथा "पर्वतो धूमवान् वह्नेः" इत्यत्र आर्द्रेन्धनसंयोग उपाधिः। यत्र धूम-स्तत्रार्द्रेन्धन—संयोग इति साध्यव्यापकता। यत्र वह्निस्तत्र आर्द्रेन्धन-संयोगो नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्या-पकता। एवं "स श्यामो मित्रातनयत्वात्" इत्यत्र शाकपाकजत्वम्

उपाधिः। न च श्यामत्वं घटादावस्ति तत्र शाकपाकजत्वं नास्तीति साध्यव्यापकत्वाभावात् शाकपाकजत्वमुपाधिर्न स्यादिति वाच्यम्। यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्। अत्र च मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकमस्त्येव। अर्थात् मित्रातनयत्वावच्छिन्नं श्यामत्वं यत्र यत्रास्ति (मित्रातनये) तत्र तत्र शाकपाकजत्वमस्त्येवेति नास्ति साध्यव्यापकत्वाभावः। ततश्चोक्तमुपाधिस्वरूपं मूले–

"सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता॥" स्वम्=उपाधिः, स्वं च साध्यं च स्वसाध्ये, तयोः=उपाधिसाध्ययोः, हेतोरेकस्मिन् क्वचिद् आश्रये व्यभिचारिता=व्यभिचार इत्यर्थः। उपाधेर्दूषकताबीजं च—

उपाधि–व्यभिचारेण हेतौ साध्यव्यभिचारानुमानं उपाधेः प्रयोजनम्। यथा धूमवान् वह्नेरित्यत्र "वह्निर्धूमव्यभिचारी तद्व्यापकाऽऽर्द्रेन्धन–संयोग–व्यभिचारित्वात्" इति। व्यापक–व्यभिचारिणो व्याप्य–व्यभिचारावश्यकत्व–नियमात्। इति संक्षेपः।

८२—शब्दोपमानयोः पृथक्प्रमाणत्वं साध्यतां पूर्वोत्तरपक्षप्रदर्शनपुरस्सरम्।

वैशेषिकाः प्रत्यक्षम् अनुमानं चेति द्वयमेव प्रमाणं मन्यन्ते। शब्दम्, उपमानं च अनुमाने एवान्तर्भावयन्ति तथा हि—'गामानय' इत्यादि पदानि पदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् 'घटमानय' इतिपद-कदम्बवत्,। दृष्टान्ते दृष्टान्तान्तरेण साध्यसिद्धिरिति सर्वत्र शब्दप्रमाणविषये अनुमानेनैव चारितार्थ्यं स्यात्।

एवम् उपमानमपि अनुमाने एवान्तर्भवति, यथा—गवयव्यक्ति-प्रत्यक्षानन्तरं "गवयपदं गवयत्व-प्रवृत्ति-निमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्, असति वृत्त्यन्तरे वृद्धैर्यद् यत्र प्रयुज्यते तत्र तत्प्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्" इत्यनुमानेन उपमानस्यापि चारितार्थ्यम्।

तदिदं न विचारसहम्। व्याप्तिज्ञानं विनापि शाब्दज्ञानस्य उपमितेश्चानुभव-सिद्धत्वात्। नहि सर्वत्र शब्द-श्रवणानन्तरं गवयव्यक्ति-

प्रत्यक्षानन्तरं च व्याप्तिज्ञाने प्रमाणमस्ति । नच सर्वत्र व्याप्तिज्ञानं कल्पिष्यते इति वाच्यम् । तथा सति सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियताम् इति । +

८३—व्यतिरेक-व्याप्तेः किं लक्षणम् ?। तदुदाहरणे संगमय्य सम्यक्प्रतिपादयत ।

साध्याभाव-व्यापकीभूताभाव-प्रतियोगित्वमिति व्यतिरेकव्याप्तिलक्षणम् । यथा "पर्वतो वह्निमान्" इत्यत्र यत्र वह्निर्नास्ति तत्र धूमो नास्तीति व्यतिरेकव्याप्तिः । साध्यं वह्निः साध्याभावो वह्न्यभावस्तद् व्यापकीभूताऽभावश्च धूमाभावस्तत्प्रतियोगित्वं च धूमस्येति लक्षणसमन्वयः ।

अत्रेदं बोध्यम्, यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते, तत्सम्बन्धावच्छिन्नप्रतियोगिताक-तद्धर्मावच्छिन्नाभावस्य सिद्धिर्भवति । तथा च यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्न-प्रतियोगिताकधूमाभावः सिद्धयति । इति ।

८४—अर्थापत्तिः प्रमाणान्तरमस्ति नवा ?। नास्ति चेत्क्व तस्या अन्तर्भावः ?। पूर्वोत्तर-पक्षप्रदर्शनपूर्वकं साधु प्रतिपाद्यतामिदम् ।

अर्थापत्तिरपि प्रमाणान्तरमितिमीमांसका मन्यन्ते । उपपाद्यज्ञानप्रभवमुपपादकज्ञानमर्थापत्तिः । योऽर्थोऽन्येन केनचित् कल्पनीयेन विना नोपपद्यते सोऽर्थ उपपाद्यः, येन च कल्पनीयेन विना नोपपद्यते स उपपादकः । यत्र शतवर्षजीवो चैत्र इति ज्योतिःशास्त्रादवगतम्, जीविनश्चैत्रस्य गृहाऽसत्वं प्रत्यक्षादवगतं तत्र शतवर्षजीविनश्चैत्रस्य गृहासत्वं कल्पनीयेन बहिःसत्त्वेन विना नोपपद्यते इति बहिःसत्वं कल्प्यते, सेयमर्थापत्तिरिति ।

इयं चानुमानेनैव गतार्था इति न प्रमाणान्तरम्, तथा हि—जीवित्वं हि बहिःसत्त्व—गृहसत्त्वान्यतर—व्याप्यम्, गृहसत्त्वं नास्तीति बहिःसत्त्वमस्त्येव । अनुमानप्रयोगश्चेत्थम्—"चैत्रो बहिःसत्त्ववान् जीवित्वे सति गृहाऽसत्त्वात्, अहमिवेति ।

---

( २० ) + कतिविधमनुमानमिति सोदाहरणं प्रतिपादयत ।

एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रापि रात्रिभोजमनुमीयते। यथा—देवदत्तो रात्रिभोजी दिवाऽभुंजानत्वे सति पीनत्वात् यन्नैवं तन्नैवं यथा नवरात्रोपवासीति +॥

८५—प्रवृत्तौ किं किं कारणं भवति ?। अथ विशेषश्च तत्रत्यः प्रतिपाद्यताम्।

अथवा

"चिकीर्षा कृतिसाध्येष्ट" इत्यादिकारिका व्याख्यायताम्।

"चिकीर्षा कृतिसाध्येष्ट-साधनत्वमतिस्तथा।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्"॥

प्रवृत्तौ खलु (१) चिकीर्षा (२) कृतिसाध्यताज्ञानम् (३) इष्टसाधनताज्ञानम् (४) उपादानस्य ( समवायिकारणस्य ) प्रत्यक्षं चेति चतुष्टयं कारणमित्यर्थः। चन्द्रानयने न भवति प्रवृत्तिः कृतिसाध्यताज्ञानाऽभावात्। जलताडनादि-व्यर्थकार्येषु च इष्टसाधनताज्ञानाभावान्न प्रवृत्तिः। द्व्यणुकोत्पादने च तदु-पादानभूत-परमाणु-प्रत्यक्षाभावान्न प्रवृत्तिः। बलवदनिष्टानुबन्धित्वज्ञानेन चिकीर्षाऽभावाद् मधुविषसम्पृक्तान्नभोजने न प्रवृत्तिः, भवति कुलालस्य घटे प्रवृत्तिस्तत्र पूर्वोक्तकारणचतुष्टयस्य सत्त्वात्।

तत्र विशेषः

प्राभाकरा ( मीमांसकाः ) हि केवलं कृतिसाध्यताज्ञानमेव प्रवृत्तौ जनकमिति वदन्ति। तेषामयमभिप्रायः–प्रवृत्तौ जननीयायां कृतिसाध्यता-ज्ञानं—चिकीर्षामेव ( व्यापारस्थानीयां ) सहकारिकारणतया अपेक्षते, नान्यत् किञ्चित्। अर्थात् कृतिसाध्यताज्ञानं चिकीर्षाद्वारा प्रवृत्तिं जनयति। कृतिसाध्यताज्ञानेन प्रवृत्तौ जननीयायां चिकीर्षाव्यापारे इत्यर्थः। नच इष्टसाधनताज्ञानस्यैव हेतुत्वं प्रवृत्तौ सम्भवति कृत्यसाध्ये चन्द्रमण्डलानयने

---

+ २१ अनुपलम्भस्य प्रमाणान्तरत्वमपाक्रियताम्।

२२ चेष्टायाश्च प्रमाणान्तरता चापि खण्डयताम्।

२३ सुखं दुःखं च निरूप्यताम्।

२४ इच्छां सहेतुकां प्रतिपादयत। का चेयं चिकीर्षा तद्धेतुः प्रति-बन्धकश्च कः।

२५ द्वेषं सहेतुकं प्रतिपादयत।

प्रवृत्त्यदर्शनात् । नचैवं केवलं कृतिसाध्यताज्ञानस्यैव हेतुत्वे मधुविषसम्पृक्तान्नभक्षणे चैत्यवन्दने च प्रवृत्त्यापत्तिः स्यात् कृतिसाध्यताज्ञानस्य तत्र सत्वाद् इति वाच्यम् । स्वविशेषणवत्ताप्रतिसन्धान-जन्य-कृतिसाध्यताज्ञानस्य प्रवर्तकत्वस्वीकारात् काम्ये यागपाकादौ कामना स्वविशेषणम् । ततश्च बलवदनिष्टाननुबन्धिकाम्यासाधनताज्ञानेन कृतिसाध्यकताज्ञानं ततश्च प्रवृत्तिः । अत एव तृप्तो भोजने न प्रवर्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात् । ननु तदपेक्षाया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयक-कृतिसाध्यताज्ञानत्वेनैव हेतुत्वमस्तु–इति चेन्न, इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साधनत्व-साध्यत्वयोर्विरोधात् । ( इति मीमांसकमतम् ) ।

मैवम्—लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात् । साध्यत्व-साधनत्वयोः कालभेदेन सम्भवान्न विरोधः एवं च तृप्तो भोजने न प्रवर्तते तदानीं तत्र इष्टसाधनत्वज्ञानाभावात् । बालश्च भावि यौवराज्ये न प्रवर्तते तदानीं तस्य कृतिसाध्यत्वज्ञानाभावात् । ( प्रवृत्तिसमये सर्वमिदं स्यादित्यर्थः ) । अत-एव रोगदूषितचित्तः प्रवर्तते विषभक्षणेऽपि तदानीं तस्य बलवदनिष्टाननुबन्धित्वज्ञानाभावात् । ( इतिसमाधानम् ) ।

### विध्यर्थकल्पनम्—

प्रवर्तकत्वानुरोधाद् विधेरपि बलवदनिष्टाननुबन्धीष्टसाधनत्वादिकमेवार्थः । 'विश्वजिता यजेत्' इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गफलं कल्प्यते । ननु सन्ध्यावन्दनादौ इष्टानुत्पत्तेः प्रवृत्तिः कथं स्यात्, अर्थवादोक्त-ब्रह्मलोकप्राप्तिस्तु फलं न कल्प्यं तथा सति सत्कर्मणः काम्यत्वे नित्यत्वं न स्यात्, इति चेन्न,—ग्रहणश्राद्धादौ नित्यत्व नैमित्तकत्वयोरिवात्र काम्यत्वं नित्यत्वयोरविरोधात्, कामनाकल्पने चार्थवादोक्तमेव फलं रात्रिसत्रन्यायेन कल्पनीयं भवति । तच्च यथा—

"सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ इति ॥

पंजाब प्रेस, पशुपतेश्वर, वाराणसी। फोन: ६६६१६